श्री० श्रीगणेशायनमः ॥ कल्याणंनोविधत्तांकरटमदधुनीलोलकल्लोलमालाखेलल्लोलंबमालामुखरित[illegible] रव० १

प्रत्नंवेतंडरत्नंसततपरिचलत्कर्णतालप्ररोहद्वातांकुराजिहीर्षादुरैविव[illegible]फणा[illegible]

[illegible]फलानांत्रिपुलभुजविराजद्विरलक्ष्मीविभूम्नां ॥ हसितसुरपुरश्रीरस्तिसाहास्तिनाख्यारिपुजनदुरवापाराजधानीकुरूणां ॥ २ ॥

यस्यामुदग्रनृपमंदिरचंद्रशालावातायनेगतिवशाद्वपुषिप्रसक्तां ॥ दीपाग्रधूममपिकांशिशिरांशुबिंबेमोहात्कुरंगइतिमुग्धजना-

वदंति ॥ ३ ॥ ग्रीष्मेषुशीतकरकांतकृतोदरासुयद्गोपुराग्रिमदरीषुपथागतस्य ॥ विश्राम्यतोहरिहयस्यविलंबनेषुचिन्हंतनोतियदि-

नमंततिदीर्घभावः ॥ ४ ॥ यत्रांगनावदनयामवतीशल्दृष्यच्चंद्राश्मसौधगलितः सलिलप्रवाहः ॥ वृंदारकेंद्रनगरीबृहदुत्सवाय-

१ करटः गंडस्थलं. २ धुनी नदी ३ कल्लोलः महालहरी. ४ लोलंबः भ्रमरः ५ मुखरितं नादयुक्तकृतं. ६ प्रत्नं पुरातनं. ७ वेतंडरत्नं हस्तिश्रेष्ठोगजाननः वेतंडरत्नमितिगजाननपर्यायोवैजयंत्यां. ८ जिहीर्षा हरणेच्छा. ९ दरं किंचित्. १० तुहिनं हिमं. ११ वंशः कुल सएव वंशः वेणुः वेण्वादौमुक्ताफलसद्भावात्रूपकं. १२ विभूमा महत्त्वं १३ हसिता तुच्छीकृता. १४ सुरपुरश्रीः अमरावती शोभा. १५ वातायनं गवाक्षे. १६ वपुषि अमृतमये धावल्यद्योतनार्थमिदंविशेषणं. १७ शीतकर कांतः चंद्रकांतः १८ हरिहयस्य सूर्याश्वस्य. १९ तदीयानि ग्रीष्मर्तुसंबंधीनि. २० यामवतीशः चंद्रः

पंकेरुहाणि परिखामवतीर्य यस्यां प्राकारभित्तिमभितः परिवेष्टयंति ॥ अंतःस्थितिर्निविडयतामबलाजनानामास्यानि जेतुमखिलानि किलात्मभासा ॥ ११ ॥ गद्यं ॥ या खलु पुरा कुरुधराधिपापराधसमेधितक्रोधेन हलधरेण निजायुधेन हठात्कर्षणशिक्षया त्वरेण समुत्क्षिप्तक्षितिभागतया नदीयभुवनभूषणायमानां भोगवतीनामात्मना विजेतुं भागीरथीपाथःपथेनावतीर्य कृतप्रस्थानेवाद्यापि परिदृश्यते ॥ पद्यं ॥ उपेत्य नां पांडुरुदारविक्रमः प्रजामनः पल्लवयन्प्रशासनात् ॥ यशः प्रकाशैर्यमुनासखीसखैर्निनाय लोकं निजनामवाच्यतां ॥ १२ ॥ गद्यं ॥ यं पराशरसुतो निखिलावनीदेशावनाय निजजननीनिदेशात् वनमनामनागितराश्चर्यजनपश्चयलिंकर्मीणः मानोदर्यस्य विचित्रवीर्यस्य कुटुंबिन्यामंबालिकायां संपादयामास ॥ पद्यं ॥ चित्रचरित्रं जगतीतले स्यन श्लाघयामास नरेषु कोवा सयत्स्वयं पांडुरपि स्वकेन गुणेन रक्तान करोत्समस्तान् ॥ १३ ॥ अंतर्भवत्कृष्णमृगाजिनांकैःमुनिर्मलैःषोडशदानकीर्तैः ॥ खंडैर





१ नदीय भुवनं तस्य शेषावतारस्य बलभद्रस्य भुवनं लोकः २ भोगवती पातालनगरी ३ पल्लवयन् अंकुरयन् विकासयन्नित्यर्थः ४ यमुनासखीसखैः यमुनासखी भागीरथी तस्याः सखायः मित्राणि सदृशा इत्यर्थः तैः ५ निजनामवाच्यता निजनाम पांडुरिति नाम तस्य वाच्यता शुभ्रत्वं ६ मनागितराश्चर्य ७ रक्तान् रंजितान् अनुरक्तांश्च ८ अजिनं चर्म [illegible]

मंदाकिनीतिलभतेमहतीमभिख्यां ॥ ५ ॥ दीप्रैरगारमणिभिर्दिवमाययमानानिश्चिन्वतेमनसियत्रनिशांयुवानः ॥ कांतांतिके
खिलकालनिवेदनायघंटामुणेरभिहतस्यघनोरवेण ॥ ६ ॥ वक्त्रंविलासमणिदर्पणधार्यमाणंत्वामाहिमांशुरयमित्यवधार्ययस्याः ॥
आदर्शबिंबधृतिरश्रुतदृष्टपूर्वातस्येतितादृशाधियंविनिवारयंति ॥ ७ ॥ आलापकालममपल्लवितांकवीणासौरभ्यपानिमधुपारव
संकुलस्य ॥ तंत्रीस्वनस्यसमितौतरुणीस्वनस्यजानातियत्रचतुरोऽपिननारतम्यं ॥ ८ ॥ शालीननामविगणय्यसखीसमाजेपश्चा
त्कृतस्यकमितुःप्रणयप्रकोपात् ॥ मुग्धाःसमीक्ष्यमुकुरायितरत्नभित्तौछायांक्षणानुतपनंशमयंतियस्यां ॥ ॥ ९ ॥ चित्रंददर्शयिपु
णाजनितस्ययस्यांमध्यंविनैवविधिनामहिलाजनस्य ॥ अंगंनितंबजघनादियतोयतोधस्तुंगंकुचाद्युपरियातिततोनुकूलं ॥ १० ॥

१ मंदाकिनी मंदंन्यूनं अकंपापं करोति मंदंगच्छतीतिवा मंदाकिनी भागीरथी. २ कांतांतिकैः कालनिवेदिभिः ३ घनः गंभीरः रात्रेः विश्रांतिकालत्वात् तस्यामेव गंभीरध्वनिश्रुतिः ४ आदर्शबिंबधृतिः दर्पणे बिंबधृत्वं पक्षे दर्शः अमावास्या तत्पर्यंतबिंबधृतिः चंद्रबिंबस्य. ५ समितौ सभायां ६ शालीनतां धैर्याभावं ७ कमितुः कांतस्य ८ मुग्धाः अनिपुणास्त्रियः ९ छायां प्रतिबिंबं अनातपंच १० अनुतपनंपश्चात्तापं छायया संतापः शमनं भवतीतिप्रासंगिकं
११ महिलाजनस्य स्त्रीजनस्य.

मुष्येद्रकारिधात्रीमृपायग०धेरतर्न[illegible]निवार्ता । १४ ॥ जथा[illegible]निग्राहे[illegible] [illegible]कर्णे[illegible]करोतनंक्रमः ॥ कुर्नी[illegible] [illegible]रथो-
यथारमांसमुद्रकांचींचसमद्रकन्यकां ॥ १५ ॥ गद्यं ॥ अथकदाचनमृगयोपलालितहृदयोनरेश्वरोऽयमश्वेशशिश्वेततेजामिविश्वा-
निशायिनिरयविजितमातारिश्वानिकृताधिरोहः पार्श्वधृतविश्वकद्रुभिरनेकवागुरोपकरणानुगैर्धैर्यधैरनुद्रुतोमृदुभद्राविनयाभ्यां-
यदुमद्रतनयाभ्यामनुविद्धः सिद्धगणगणनीयमहिमवतोहिमवतोऽवजगाहेमहतीमटवीमटवीथिका ॥ तत्रसनाथ[illegible]निशुल्कव-
नमल्लिकामतल्लिकोद्वेल्लितधम्मिल्लोवेल्लग्नदृढलग्नकच्छपुटविच्छुरितच्छुरिकोनिषंगानुषंगमा[illegible]मलनमा[illegible]लित: परनिगामपरं

१ निग्राहः ग्रहणं २ चंक्रमः गतिः ३ शकुंतशिरथः शकुंतीनां पक्षिणां ईशः पतिः गरुडः सएव रथः वाहनंयस्य सविष्णुः ४ समुद्रकांची पृथ्वी ५
उपलालितं उत्सुकं ६ विश्वकद्रुभिः मृगयाकुशल[illegible] [illegible] ८ मतल्लिका प्रशस्ता ९ उद्वेल्लितः ऊर्ध्वंबद्धः १० वलग्नं मध्यः ११ कच्छ-
पुटं पडदाळइतिप्रसिद्धं

वेतिमातुर्धुरितातपृच्छया ॥ प्रलोभतुल्यंप्रवदंतमर्भकंमुदाहसन्नंजिघ्रतिमूर्ध्निपुण्यभाक् ॥ ३५ ॥ नियतोपितृभिस्त[illegible]पत्यधनः पुमान् ॥ अध्वनीनैरतिश्रांतैरवकशीविपादपः ॥ ३६ ॥ कदापतातशब्दस्यकल्पभूमिरुहामिव ॥ नार्थभवितुमर्हामिनरवाहन संनिभः ॥ ३७ ॥ किंभोगवैभवयशः क्षितिजीविनाथैरंभोरुहाक्षिनियमैरनघैस्त्वमेव ॥ शापानिरेकदवपावकशायिनोमेनापा पनोदविधयेतनयंप्रसूष्व ॥३८॥ गद्यं ॥ इत्यमंकोचनःशोचतःपत्युरग्रभुविममग्रमंदाक्षरमणीयमंदाक्षैरमणीयंत्रिनमिदंवचनंपृथापि कथयामास॥राजन्पुराखलुपितामममपितामहममानस्यानिशांतमधिवमतःकृशांतनुलनातपमावहनोपिदिशांततिपुनिशानरविका तिभृशांतर्रगरुचांतरंगपरंपरांतरेलयितुरशांतमनमोमुनेरुपांतपरिचरणायमामनुशासितशैवराज्यामपिनियोज्यामकरोत् ॥पद्यं॥ ततोनिदेशान्ममयेपुलब्धुंमयामहायत्नजुषामहर्षेः ॥ आरामवल्लीरपरहायतस्यभ्रूवल्लिमेवप्रनिपाल्यतस्थे ॥ ३९ ॥ यथायथामेव



१ अध्वनीनैः पथिकैः २ अवकेशी वंध्यवृक्षः ३ अर्थानवितुं [illegible] ४ मंदा[illegible]
५ मंदाक्षरमणीयंवितं मंदानि[illegible] ६ निशांत [illegible] ९ तरलयितुः प्रसारकस्य १० नियोज्यां दासीं.

पिव्यसृज्यत ॥ पद्यं ॥ अष्टांगयोगानवतोम्यराज्ञोमिथ्रान्नमार्मान्मृदुकदमत्कं ॥ [illegible] नस्य [illegible] निर्कोलसौधोदर्भोपिसिंह.सनतां जगाहे ॥ २९ ॥ गद्यं ॥ अहोनरपतितापसयोःसमानरूपफलमिदमाचरितं ॥ तथाहि ॥ पद्यं ॥ बाणशापप्रयोगाभ्यांबाधितौ ताविभावपि ॥ तपस्विताःयतःसद्यस्तादृशीमुपजग्मतुः ॥ ३० ॥ ग० ॥ क्रमादतिपतितेचावरोधवधूजनानुरोधगुणदात्रेगणरात्रे ॥ पद्यं ॥ अपाकरिष्यन्ननपत्यभावमपत्यभावंभुवनंकरिष्यन् ॥ उवाचदेवीमुचितंमपांडुरूपंव्हरेजातुचिदूहदक्षः ॥ ३१ ॥ परिपालयतोपिमेमहींपरिपूर्तिर्नतनूजदुर्गतेः ॥ प्रजयाहिमनुष्यइत्ययमौप्रथनेहिश्रुतिवर्णपद्धतिः ॥ ३२ ॥ गात्रंनकेवलमशेषबुधोपलाल्यं गोत्रंचतत्रभवतःकुमुदैकबंधोः ॥ आपांडुवर्त्तनइतिस्फुटमद्यमन्येयस्मात्प्रजांनलभसेयदुवीरकन्ये ॥ ३३ ॥ नह्यतीवविधिरप्यसुतानांनह्यनेफलमितिश्रुतिसिद्धे ॥ [illegible] ममयर्थाहेवमाध्योमीलितोपिननथापरलोकः ॥ ३४ ॥ अहंकिमंबाकिमभीष्टतापदेत

१ तपस्विता तापसत्वं शोच्यत्वंच. २ दात्र छेदके. ३ अनपत्यभावं नास्तिअपत्य संततिर्यस्य तस्यभावं ४ अपत्यभाव नास्तिपत्युः अभावोयस्मिनूतत्. ५उपव्हरे एकांते. ६ बुधाः देवाः [illegible]श्च. ७ तत्रभवतःपूज्यस्य. ८ आपां[illegible] पर्यंतं. ९ नह्यते सवद्धोभवति ददातीत्यर्थः १० हवः युद्धं यज्ञश्च. ११ मीलतः मृतस्य. १२ परलोकः शत्रुलोकः स्वर्गश्च.

भवानात्मभवान्मयिविकमदनुकंपाःसंपादयिष्यंति ॥ ५० ॥ इतिनृपायकृपायनचेतसेगद् ... हं ॥ अदर्शनव्रणपीडमहर्पतेरभिदधेरतिसंगमनंघिना ॥ ४५ ॥ इतिवचनमयींसुधांकिरंतींयदुनृपतेस्तनयाप्रशंसमानः ॥ पतिरनुमनुतेस्मपौरवाणांप्रकृतमहोत्सवपारदर्शनाय ॥ ४६ ॥ तदनंतरं ॥ धर्मात्प्रापयुधिष्ठिरंपवनतोभीमंचभीमंद्विषांजिष्णोर्जिष्णुमनीतिधृष्णुमनघाकुंतीमुनोर्विद्यया ॥ अन्यामापिकयैवतत्रनकुलंरूपास्पदंगोष्पतेःसच्छात्रंमहदेवमप्यजनयन्नासत्ययोरंतिकात् ॥ ४७ ॥ तदनुवासवनंदनसंभृताःसपटुगीतिरवप्रमदालयः ॥ सुमनसस्तुयथोचितमाचरन्निपतनंभुविनृत्यविधिंदिवि ॥ ४८ ॥ जन्मोत्सवोमहानेषांजलमत्यच्छमावहन् ॥ विद्यामनन्यसामान्यांव्रीडांकुंभभुवोऽनयत् ॥ ४९ ॥ स्वस्यचक्रगतिंसख्युःस्वयमप्याश्रिताइव ॥ जवात्प्रदक्षिणज्वालाजज्वलुर्यज्ञपावकाः ॥ ५० ॥ सामोदोभीमसंभूतिसंभृताशौचवत्तथा ॥ संकुचन्निवसंस्पर्शेसमीरोमंदमाववौ ॥





१ अदशनव्रणपीडं दशनाः दंताःतेषा यापीडासानास्तियस्मिन् दक्षयज्ञेपूष्णःदंतभंगात्. २ प्रकृतमहोत्सवः पुत्रमहोत्सवः ३ सच्छात्रं समानं. ४ नासत्ययोः अश्विनीकुमारयोः ५ नंदनंवनं नंदनःपुत्रश्च. ६ प्रमदालयः मत्तभ्रमराः कामिनीपंक्तयश्च. ७ सुमनसः. पुष्पाणि देवाश्च. ८ विद्यां जलस्वच्छीकरणविद्यां अगस्त्योदये जलानिनिर्मलानिभवंतीतिपुराण प्रसिद्धिः ९ सामोदः सगंधः महर्षः

नयत्नजन्मनांनिदाघतोयेननिषिक्तमंगकं ॥ नथा[illegible]थावर्धन[illegible]महा[illegible]लिका[illegible]विवल्लरी ॥ ४० ॥ [illegible]नस्तस्यत

पःकृशस्यसरूपतामाधुमिवाश्रयद्भिः ॥ दिनेदिनेमेदयनीयरूपैरगैरशेषैरतिकार्श्यमापे ॥ ४१ ॥ आपादनेनसमिधामभिषेकवा

राम्भ्यर्चनासुमनमामपितापसेंद्रः ॥ मध्येवशिष्यजनताममतांवितन्वन्नंतेवैसंतमपिकोपमपाचकार ॥ ४२ ॥ एकांसमांतत्रव

सन्कदाचिदेकांसमांपार्श्वगतांमवेक्ष्य ॥ समाधिवृत्त्यासहमौनमुद्रांसमापयामासतपोधनेंद्रः ॥ ४३ ॥ गद्यं ॥ वत्सेभवत्सेवामंप्रदा

येनसंप्रतिभृशंप्रसीदामीतिव्याहृत्यममुनिरनुकंपितचेतामह्यमत्यर्थमभीप्सितार्थसमर्थापनपरतंत्रंकमपिमंत्रमुपादिशत् ॥ पद्यं ॥

अपिकुधामावसतेरमुष्मान्मत्वागुरुत्वंवरमंत्रलाभे ॥ अपुष्पवत्यामपिमेदशायामामोदभारोधिकमाविरासीत् ॥ ४४ ॥ गद्यं ॥

अधुनातस्यप्रभावेनशतमखमुखासुनिखिलासुलेखलेखासुयेयेपरोर्ध्यास्तेनेरहसिध्यानमात्रसाध्यसान्निध्याः स्वस्वानुरूपगुणवि

१ तापसः ऋषिः वृक्षविशेषश्च. २ अंतेवसंतं समीपे वसंतं शिष्यंच अनेक शिष्यकार्य कारित्वात् मध्येव तस्य सर्व शिष्यविषयिणीप्रीतिर्जातेतिभावः

३ समां वर्षं. ४ समर्थापनपरतंत्रं दापन तत्परं. ५ गुरुत्वं देशिकत्वं. ६ अपुष्पवत्यां पुष्परजः कममंच तदभाववत्यां. ७ आमोदभारः हर्षसुगंधयोः अतिशयः

८ लेखलेखासु देवपंक्तिषु. ९ परार्ध्याः श्रेष्ठाः

मासलमुत्तमागम्याधायजानुकृतचंक्रममाश्रमांते ॥ याहालनैववहनाद्विरराम[illegible]कौतूहलं[illegible]नतुक[illegible]चननापमाना ॥ ५९ ॥ वृद्धतापसपुरःप्रसारितंवेणुदंडमवलंब्यशैशवे ॥ भावयन्निवगदापरिग्रहंभाविनंपवननंदनश्चचाम्र ॥ ६० ॥ मुनिसुतैर्गनिशोपजुषो वनेमुहुरमीनवशैशवकेलिषु ॥ मलिननामनयंतकलेवरंमदकलाःकलभाइवधूलिभिः ॥ ६१ ॥ तत्रतत्रमृदुपांसुषुपांडोः पुत्रपादतलविन्यसनेन ॥ छत्रकेतुकुलिशैःस्फुटरेखैश्चित्रवत्यभवदाश्रमभूमिः ॥ ६२ ॥ लीलास्मितैःसृक्कयुगाद्गलद्भिर्लालाजलानांलुलितैःपृषद्भिः ॥ बालादधुस्तेल्हदिमौक्तिकानांमालाधुतोल्लेखनरंध्रसूत्राः ॥ ६३ ॥ अत्यंतबाल्यादमृनायिनाभिरन्योन्यमर्धोक्तिभिराव्हयत्सु ॥ सभीमसेनोऽजनिपांडुसूनुष्वर्धोक्तनामापिचपूर्णनामा ॥ ६४ ॥ ग० ॥ तदानीमयमंबालिकासूनुरविलंबितंसंक्रंदनइवपंचनंदनागमसंपदातंयामुदमभितांबभार ॥ प० ॥ पुत्रेषुनेपुक्रमपोषितेषुविलोकयंत्याविहरत्सुकुंत्याः ॥ आप्याययामासतु

१ सृक्कयुगात् ओष्ठप्रांतयुग्मात्. २ धुतोल्लेखनरंध्रसूत्राः धुतंरहितं उल्लेखनं उत्खननं [illegible]रंध्रसूत्रंच यासांताः. ३ पंचनंदनागमसंपदा पंचानां नंदनानां पुत्राणां आगमः प्राप्तिः तद्रूपया संपदा पक्षे पंचानां नंदनानां [illegible]

॥ ५१ ॥ कन्यकात्वेपि नव्येपाकामुकी [illegible] ॥ प्रसूतेः [illegible] ॥ ५२ ॥ [illegible] पुत्रमेवा[illegible]
वीरुधः ॥ फलेग्रहयएवासन्प्रसूनात्प्राकूपृथावने ॥ ५३ ॥ ग० ॥ तदनुगुणगणैरभंगुरशुभयुनावकाममयसमय ॥ ५० ॥ प्रजा
धिपोसौप्रथमंयुधिष्ठिरेसुतेपुतेजस्विपुतेपुपंचसु ॥ प्रभाकरो चैतपाइवोन्नतेप्रपातयामासविलोचनद्वयं ॥ ५४ ॥ तपस्विनीनां
स्तनपायिनस्तेदरैंकणत्कीचकदत्तकर्णाः ॥ वनेदिनांतेवसुधेंद्रपुत्रावल्केपुनिद्रासुखमन्वभूवन् ॥ ५५ ॥ क्षुत्पीडयास्तनरसेकलहं
शिशूनांकुर्वतितदाशमयितुंकुचकुंभयुग्मे ॥ एकंयुधिष्ठिरधनंजययोश्चभा गमेकंनमीरिणसुतस्यचसाविभेजे ॥ ५६ ॥ निशाचरैःसमं
बाल्येनियोद्धुमिवकौतुकी ॥ उत्तानशयनेमुष्टिमुदग्रांमारुतिर्दधौ ॥ ५७ ॥ ग० ॥ ततःक्रमेणगतेपुकतिपयेपुवासरेपु ॥ प० ॥
पद्भिरात्मपितृयोपितिभूमौस्पर्शनंपरिहरन्तइवैते ॥ जानुभिःकरसरोजसहायैश्चंक्रमंचैमदकुर्वनबालाः ॥ ५८ ॥ आदायभीममति

१ पुष्पात्कुसुमात् रजोदर्शनाच्च. २ फलेग्रहयः फलधारिण्यः ३ शुभंयुना शुभान्वितत्वं. ४ पंचतपाः पंचाग्निभिःसाध्यंतपोयस्यसः ५ दरं छिद्रं. ६ नियोद्धं बाहयुद्धं कर्तुं. ७ चमत् सुंदरं.

रपल्लवतल्लजपरिचर्वणगर्वायमाणकलकंठयुवकंठोक्तपथिकजनसंदोहजीवितसंदेहाः वनदेवतावदनतिलकायमानतिलकाव





लिकालिकापलितंभावुकनभोविभागाः मदनहुतभुगंगारमदगवामलभृंगारमधुरमसंगारचितमदभृंगारवाविभवतुंगारहितमिथु

नशृंगारसाः समुन्मिषद्वासंतिकामिषेणसीमंतिनीगतेह्रदंतं दुरंतंमनामिविचिंत्यरहसिवमंतंनृपंतमिवहसंतोवसंतोदयवासरामंदं

मंदमरण्यांगणधरण्यांकमपिविकासमापादयामासुः ॥ ५० ॥ किंशुकस्यवदनेरुचिरत्वंकिंशुकस्यत्हृदयेऽपिवशित्वं ॥ किंशुक

स्यकुसुमेपुनदंतीशंसतिस्ममधुपालिरितीव ॥ ६९ ॥ कुरवकेरवकेलिभृतःसुधाममधुरंमधुरंमधुषट्पदाः ॥ पपुरवापुरवार्यम

पिस्मयंयंनृपवनेपवनेरितपादपे ॥ ७० ॥ ग० ॥ अथास्मिन्नमुनातपोवनकुटीरपरिसरेपटीरगिरिबंधुनागंधवहस्तनंधयेनसन्निधिं



१ पल्लवतल्लजाः प्रशस्तपल्लवाः २ कलकंठाः कोकिला. ३ पलितं युक्तः धवलीभवन्. ४ भृंगारः द्विमुखपानपात्रं झारीतिख्यातं. ५ तुंगः अधिकः अरहितानां युक्तानां मिथुनानां स्त्रीपुरुषाणां शृंगाररसः येषुते. ६ उदंत वृत्तांतं ७ शुकस्य कीरस्य शुकाचार्यस्यच. ८ वशित्वं इंद्रियनिग्रहबलं. ९ किंशुकस्य पलाशस्य. १० स्मयं मदं. ११ पटीरगिरिः मलयाचलः १२ गंधवहस्य वायोः स्तनंधयः बालः मंदवायुरित्यर्थः तेन.

रंतरंगंप्राप्यापिमाद्रीतनयौयमत्वं[1] ॥ ६५ ॥ नैरादराद्वनलता सुदृढोंकृतामुरोऽ[illegible] [illegible]तुरैः । [illegible]
कृत्पवमानसूनोरारोहणंद्रुतमभूदवसानभूमिः ॥ ६६ ॥ भीमेनदंतयुगुलेविधृतेयमन्येवन्येभमारुरुहुरद्रिनिभंसगर्भ्याः ॥ शुंडां
प्रगृह्यविजयः स्वयमेवमानीनंलीलयारदपथेनसमारुरोह ॥ ६७ ॥ ग० ॥ तदनुविधिवदुपनीतानांक्रमेणमधुरेणवयसा[2]शिर
साचविधृतवपुषांविनयगौरवपुषांसकलासुकलासुकौशलमुन्मीलयतांतेषांयशांसिबलभेदनमदावलस्यधाम्नो[3]र्युगुलमपियुगपदु
ल्लंघयामासुः ॥ प० ॥ नवतरुणिमलक्ष्मीनंदनीयंशरीरंकुरुवृषभमुनानांकुर्वतीनेनपात्र ॥ मुनिततितिरनिमेनेमोहनायत्रिलोक्याः
स्वविशिखइवकामःसोपिकिंपंचधाभूत् ॥ ६८ ॥ ग० ॥ अथकदाचिदखिलहरिदंतरानिरंतरचलमानमलयपवमानकंपितचंपकसंपा
दितसौरभसंपदनुकंपितनिखिलनिलिंपपथाः केसरकुसुमकेसरशिखरभासुरधूलीधूसरदिशोमनमिजविजयसहकारचतुरसहका[4][5]

१ यमत्वं युग्मत्वं अंतकत्वंच. २ वयसाता रुण्येन विधृतंव्याप्तंवपुः शरीरं येषांतेषां शिरसा विनयस्य नम्रतायाः गौरवंआधिक्यं पुष्णाति तेषा।मितिच यथासं
ख्यं योज्यं. ३ धाम्नोः स्थानतेजसोः ४ सहकारः साह्यकरणं. ५ सहकारः आम्रः

लदविरलवकुलमुकुलपुनरुक्तपुष्पतल्पमविगणितवीणागुणक्वणितमणितमसृणितमतिचिरप्रमुषितमन्मथसमरमुन्मीलयामासतुः ॥ गद्यं ॥ आयुषः संततिर्दीर्घामावह रुपिपौरवः ॥ आयुषः संततेरंतमाररोहरतेरिव ॥ ७५ ॥ नृपस्यदूरीकृतपौरसंगमस्य मविहायैकमुपेयुषोवधूं ॥ अजस्रमुरीकृतपाशसंगमोयमोपरः सन्निदधेलतागृहे ॥ ७६ ॥ आलिंगनेनकुरबोहरिणेक्षणानामामोदगौरवभृतोभुविमर्वणेव ॥ तन्मध्यमार्पितदामकथंनुतांदुरालिंग्यमद्रतनयामवबाधिप्रपेदे ॥ ७७ ॥ निद्रयाकिलनिर्मीलितंमृतेर्मुद्रयानिजमुदीक्ष्यवल्लभं ॥ उद्रवाकरमुदस्यविह्वलामद्रराजतनयारुरोदसा ॥ ७८ ॥ तन्निशम्यसममेत्यकुमारैस्तादृशंपतिमवेक्ष्यरुदंत्याः ॥ भोजपुंगवभुवोश्रुनिपातैर्भृंगपिस्वयममुंचतदोप्पं ॥ ७९ ॥ साश्वानतोनुसृतयामहतस्यराज्ञोनिर्वर्त्तितामुतनयैर्निखिलक्रियासु ॥ भूयोपितैसुमनसांपुरतः प्रकाशंजायापतीतुसुरतोत्सवमन्वभूतां ॥ ८० ॥ गद्यं ॥ तदनुनव्यवैधव्यवहु

१ प्रमुषित लुप्तं आयुषः आयुर्नाम्नः राज्ञः पक्षेआयुष्यस्य ३ पाशः पतपाशः ४ यमं योग ५ कुरवः कुरुवदयाः कुरवकवृक्षस्य ६ आमोदः हर्षः सुगंधश्च ७ अवधि क्वशो स्त्राणां आलिंगनेन कुरवकः कुसुमितोभवतीतिप्रसिद्धेर्विस्मयवादाश्चर्य ८ निर्मीलित कृतंनेत्र संकोचं ९ बाष्प अश्रु ऊष्माणंच १० सुरतोत्सवं देवत्वेन आनंदं पक्षे विषयोपभोगेन आनंदं.

स्तरगप्राप्यापिमाद्रीतनयीयमत्वं ॥ ६५ ॥ तैरादरसद्वनलतासुदृढीकृतासुदोलाविधेः परिचितस्यसहर्षिपुत्रैः ॥ पर्याप्तलब्धमस
त्स्वमानसूनोरारोहणंद्रुतमभूदवसानभूमिः ॥ ६६ ॥ भीमेनदंतयुगुलेविधृतेयमन्येवन्येभमारुरुहुरद्रिनिभंसगर्भ्याः ॥ शुंडां
प्रगृह्यविजयः स्वयमेवमानीतंलीलयारदपथेनसमारुरोह ॥ ६७ ॥ ग० ॥ तदनुविधिवदुपनीतानांक्रमेणमधुरेणवयसाशिर
साचविधृतवपुषांविनयगौरवपुषांसकलासुकलासुकौशलमुन्मीलयतांतेषांयशांसिबलभेदनमदावलस्यधाम्नोर्युगुलमपियुगपदु
लंघयामासुः ॥ ५० ॥ नवतरुणिमलक्ष्मीनंदनीयंशरीरंकुरुवृषभसुतानांकुर्वतीनेत्रपात्रं ॥ मुनिततिरितिमेनेमोहनायत्रिलोक्याः
स्वविशिखइवकामःसोपिकिंपंचधाभूत् ॥ ६८ ॥ ग० ॥ अथकदाचिदखिलहरिदंतरनिरंतरवलमानमलयपवमानकंपितचंपकसंपा
दितसौरभसंपदनुकंपितनिखिलनिलिंपपथाः केसरकुसुमकेसरशिखरभासुरधूलीधूसरदिशोमनसिजविजयसहकारचतुरसहकौ

१ यमत्वं युग्मत्वं अंतकत्वंच. २ वयसाता रुण्येन विधृतंव्याप्तंवपुः शरीरं येषांतेषां शिरसा विनयस्य नम्रतायाः गौरवंआधिक्यं पुष्णांति तेषां॥ भीविष पयास [illegible] योज्यं. ३ धाम्नोः स्थानतेजसोः ४ सहकारः साह्यकरणं. ५ सहकारः आम्रः

लदविरलबकुलमुकुलपुनरुक्तपुष्पतल्पमविगणितवीणागुणक्वणितमणितमसृणितमतिचिरप्रमुषितमसमशरसमरमुन्मीलयामासतुः ॥ पद्यं ॥ आयुषः संततिंदीर्घामावहन्नपिपौरवः ॥ आयुषः संततेरंतमाहरोहरतेरिव ॥ ७५ ॥ नृपस्यदूरीकृतपाशसंगमंयमविहायैकमुपेयुषोवधूं ॥ अजस्रमुरीकृतपाशसंगमोयमोपरः सन्निदधेलतागृहे ॥ ७६ ॥ आलिंगनेनकुरवोहरिणेक्षणानामामोदगौरवभृतोभुविसर्वएव ॥ तन्मध्यभागपितदासकथंनुपांडुरालिंग्यमद्रतनयामवधिंप्रपेदे ॥ ७७ ॥ निद्रयाकिलनिमीलितंमृतेर्मुद्रयानिजमुदीक्ष्यवल्लभं ॥ उद्रवाकरमुदस्यविव्हलामद्रराजतनयारुरोदसा ॥ ७८ ॥ तन्निशम्यसममेत्यकुमारैस्तादृशंपतिमवेक्ष्यरुदंत्याः ॥ भोजपुंगवभुवोश्रुनिपातैर्भूरपिस्वयममुंचतबाष्पं ॥ ७९ ॥ माद्यातततोनुमृतयासहतस्यराज्ञोनिर्वर्त्तितासुतनयैर्निखिलक्रियासु ॥ भूयोपितौसुमनसांपुरतः प्रकाशंजायापतीतुसुरतोत्सवमन्वभूतां ॥ ८० ॥ गद्यं ॥ तदनुनव्यवैधव्यबहु

१ प्रमुषितं लुप्तं २ आयुषः आयुर्नाम्नः राज्ञः पक्षेआयुष्यस्य ३ पाशः भवपाशः ४ यमं योगं ५ कुरवः कुरुवंश्याः कुरवकवृक्षश्च ६ आमोदः हर्षः सुगंधश्च ७ अवधिं नाशं श्रोणीं आलिंगनेन कुरवकः कुसुमितोभवतीतिप्रसिद्धेर्विरुद्धत्वादाश्चर्यं ८ निमीलितं कृतनेत्र संकोचं ९ बाष्पं अश्रु ऊष्माणंच. १० सुरतोत्सवं देवत्वेन आनंदं पक्षे विषयोपभोगेन आनंदं.

नीयमानोमद्रजः परिग्रहस्तपस्यंतमपिमनस्यंतः कंपरितापसंपदानलिंपेदित्यर्थांतरमप्यलिगिराबोधयंत्या मिववनवासंत्यामयं क्षण[illegible]वक्षितिपतिरिक्षुधन्वनोलक्ष्यंतामध्यरुक्षत् ॥ पद्यं ॥ परित्दत्यतनुंचित्तेबाणंकामोमुमोचयत् ॥ अंतरेवातिरक्तोऽभूदव्रण स्त[illegible]हिर्नृपः ॥ ७१ ॥ कंकेलिदेशमुपयाम्यधुनेतितावत्कंकेलिसंवलन कल्पितचित्रशोभं ॥ माद्याकरेणुरिवसाकमसौकरेण्वागूढंययौकुरबकद्रुलतानिकुंजं ॥ ७२ ॥ शापंचमृत्युप्रदमग्रजातेस्तापंचपत्युः स्मरजंनिरीक्ष्य ॥ दूरेतरेऽस्मिन्सुरतेपिदेव्यादोलायमानं त्दृदयंतदासीत् ॥७३॥ चाटुप्रयोगेचतुरः सपांडुः प्रसूनतल्पेप्राविवेशितायाः ॥ क्षौमंबिभेदस्मरराजधानीक्षौमंकरांभोजदलेनतस्याः ॥ ७४ ॥ गद्यं ॥ तत्रतौराजदंपतीमुनिशापबलपरिचिचिक्षयेवमुहुर्मुहुरभंगुरालिंगनमंगलतरंगितकुचकुंभसंभृतघर्मजलनिर्मितमदनयौवराज्याभिषेकमधरितमधुरसमधुरिमाधरबिंबचुंबनाडंबरविडंबितांबरचरकुटुंबिजीवनमतिजवपंफुल्यमानधम्मिल्लविग

१ मद्रजः परिग्रहः, ममरजसां परागाणां परिग्रहः समुदायः, पक्षेमाद्रीपत्नीच २ इक्षुधन्वनः कामस्य ३ अतिरक्तः अनुरक्तः रक्तवर्णश्च ४ कंकेलयः अशोकवृक्षाः ५ अस्मिन् पांडौ ६ क्षौमं प्राकारं सूक्ष्मवस्त्रंच चतुरत्वात्राज्ञा कमलपत्रेणापि प्राकारभेदः कृतः इतितात्पर्यं ७ परिचिचिक्षया परीक्षितुमिच्छया ८ तरंगितौ प्रवृद्धौ ९ अंबरचर् कुटुंबिनां देवानां जीवनं सुधा.

3609

मेधोत्सेधसविधधरणीरुहमधिरूढामकुतोरोधांविरोधविषवीरुधमेधांचक्रे ॥ पद्यं ॥ तत्रोदयानविनयान्दधतांक्रमेणदुर्योधनाद्यसुहृदांदुरहंकृतीनां ॥ पट्टाभिषेकमभिलष्यतिफालभागेकुट्टाकभावकुतुकंकुरुतेस्मभीमः ॥ ८४ ॥ पंचेध्मप्रवहंतीनांपवनात्मजएवसः ॥ कौरवक्रोधसिंधूनांक्रमात्संगमभूरभूत् ॥ ८५ ॥ ॥ इत्यनंतभट्टकविकृतौचंपुभारतेप्रथमः स्तबकः ॥ १ ॥

१०

गद्यं ॥ एकदातुतेसर्वेपिसुपर्वसरितः सलिलेषुचिरंविल्हत्यसमुत्तीर्णावीचीभिरनीचीभिरुल्कूलितफेनकूटेष्विवपटगृहवाटेषु परिगृहीतमनोहरांबरपटीरहाराभ्यवहाराः कुमाराः कुशलकुशीलवबालककुलपरिशीलितविचित्रवादित्रकलशीरवविवशीकृतमानसाः सुखमासामासुः ॥ पद्यं ॥ रहसिनलिनतल्पेरत्नपर्यंककल्पेदिनकिरतिसमीरैः सेव्यमानः सभीमः ॥ तटभुविकुसुमानांतादृशैर्गंधपूरैरधिकमलसतायाहांनिदद्रौनिदद्रौ ॥ १ ॥ गद्यं ॥ अथनिशीथेतथाभूतस्यतस्यजिघांसयाकुरुनरेंद्रनंदनेनचा

१०

१ उत्सेधः उन्नतः २ पूर्वं पंचापि पांडवाः कौरव क्रोधविषयः आसन् इदानींतु भीमएव तद्विषयोजात इत्यर्थः. ३ कुशीलवाः गायकाः ४ परिशीलितं अभ्यस्तं ५ कलशी वाद्यविशेषः ४ हानिदद्रौ हानिदाः श्रमहानिदाः द्रवः वृक्षाः यस्यां तस्यां.

विधव्यथायाः पृथायाः पुरतो निर्मर्याद पितृशोक विदार्यमाणधैर्यसोदर्यजनपरिवार्यमाणायत्व दिविदितनिखिलधर्मजातायधर्म जातायमहत्यामपिविपत्त्यांवैयात्येनभवितव्यमितिराजनयनांकुशंप्रकाश्यकाश्यपादयोदयोपेताः शतशृंगमुनिपुंगवास्तंगमणि सौधशृंगसंकुलंकुलक्रमागतंकुरुनगरमेतानवतारयामासुः ॥ पद्यं ॥ मंदंमंदमुपेत्यतत्रसदयोमतपांडुपुत्रांकुराः क्वेतिप्रेमपुरः प्रसारितकरः कुर्वन्दृढालिंगनं ॥ स्पर्शंस्पर्शमिमान्निजांकगामितान्भ्रातुः स्मरन्कौरवश्च्योतद्भिर्नयनांबुभिः सविदधेलोकंनदीमातृकं ॥ ८१ ॥ पांडवेषुदृढतापरिणाहप्रायरूपबलसंपादियत्तां ॥ स्पर्शनंविदधतैवदृशांधः पाणिनापरिममौधृतराष्ट्रः ॥ ८२ ॥ दत्वातत्तत्प्रत्यहंयद्यदिष्टंयावत्स्वेषामात्मजानांशतेपि ॥ पांडोः पुत्रेष्वंबिकासूनुरेतेष्वेकैकस्मिन्प्रेमतावद्बबंध ॥ ८३ ॥ गद्यं ॥ एवंवत्सभावेपिभक्तिमत्सुतेपुनिजपितृवत्सलतामसकृत्समक्षिमत्सरेणदुर्मनायमानोदुर्योधनोत्हृदयालवालेराधेयप्रधानदुर्बोधन

१ धर्मजातं धर्मसमूहः २ वैयात्येन धैर्येण ३ राजनीतिः सैव अंकुशः आवरकःतं ४ नदीजल संपन्नं ५ प्रायं वयः.

रोदिविषत्तटिन्याः ॥ मरुत्सुतंमारयितुंप्रवीरंसारागुणाः[1] साधनतामवापुः ॥ ५ ॥ गद्यं ॥ ततः पातालभुवितदागमनकौतुकिनावासुकिनासंमानितःसधृतिमानितस्ततोष्टासुदिशामुतदनुगुणपरिगणनंदिनगणमत्ययशंकिभिरितरैरुपत्यैः सहविचिन्त्य[2]हावत्सरिपुभर्त्सनभीमकवानिषीदसीतितिविषीदंत्याःकुंत्यानवममपिवामरमैनवम[3]मेवसंजनयन्प्रभंजनभूरमृतांजनैस्त्रिदशैरंजयामास॥ आगतस्यतस्यमदावलायुतबलावहानांपृदाकुपरिवृढ[4]दापितदशाकलशपीयूषाणांनिषेवणेनविशेषितपरिपोषपात्रंगात्रंसवित्रीभुजांतरइवसोदरकौरवव्हृदयेपिमोदविषादसंपदौनममतुः तदनंतरं ॥ पद्यं ॥ काष्ठां[5]परांकार्मुककौशलस्यकाष्ठाः[6] परास्तानपितद्यशोपि ॥ प्रज्ञादृगारोपयितुंप्रवृत्तोव्यज्ञापयाद्विष्णुपदीतनूजं[8] ॥ ६ ॥ गद्यं ॥ सोपिकृत्यविदामग्रणीरपरेणेवशरजन्मना[9]कृपेणबहुकृपेणनिरवद्य[10]वीरयशसोनिषद्यां[11]चापविद्यामापाद्यापितांपुनरुक्तयितुंदिशिदिशिनैत्रगुणंपौत्रगणंमहताधननिवहेनसहविविधध

१ साराः गुणाः विषदाः औदनिकाः दृढा रज्जवश्च पक्षे साराऽगुणा इतिसमस्तंपदं महादोषाः २ विचिन्त्य आलोच्य ३ अनवमं उत्तमं. ४ पृदाकुपरिवृढः पृदाकूनां सर्पाणां परिवृढः श्रेष्ठः ५ काष्ठां उत्कर्षं ६ काष्ठाः दिशः ७ प्रज्ञादृग् प्रज्ञाबुद्धिः सैव दृग्दृष्टिः यस्यसः अंधइत्यर्थः ८ विष्णुपदीतनूजं भीष्मं ९ शरजन्मना कार्तिकेयेन १० निरवद्यं निर्दोषं ११ निषद्यां क्रयविक्रयस्थानं.

दितैर्नरेंद्रै[1]रुपेत्ययुगपदेवझटितिनि[2]भृतसमुद्घाटितेषुनियंत्रणपेटकेषु ॥ पद्यं ॥ सुतेपितृस्वादिमसंप्रदायशुशु[3]त्सयेवश्वसनाशनेंद्राः ॥ समरिसूनुंसमुपेत्यजिव्हाबहिः प्रसारान्बहुशोवितेनुः ॥ २ ॥ सुप्तस्यतस्यतुसुयोधनभृत्यमुक्तावाताशनाश्वसकलावनदेवताश्च ॥ आ[4]शीर्द्वयंवपुषिचायुषिचप्रतेनुः पूर्वानतत्रचरमैवपुपोषवीर्यं ॥ ३ ॥ मर्मदत्तदशनाभुजंगमामारुतैर्वपुषिसु[5]प्तिभूरुहः ॥ मुष्टिमेयतनवोविरेजिरेमूलिकाइवबहिर्विनिर्गताः ॥ ४ ॥ ग० ॥ अपरेद्युरपिपुनराजीवंतंनिद्रारुणनयनराजीवंतंसमुग्धधीः स्निग्धइवस[6]ग्धिकेलिकाथामा[7]रालिककरदापितकवलनि[8]र्चोलितकरालगरलविव्हलंप्रव्हलंबिशिरसंरज्जुभिः परिणा[9]ह्यपरिणाहिनीभिरसुल्हदांल्हदयशूलमपिशूलकीलिनेनिर्जरसरिदंतर्जलेविसर्जयामास ॥ पद्यं ॥ तेषांतदानींधृतराष्ट्रजानांतीरेचर्नी

१ नरेंद्रैः विषवैद्यैः २ निभृतं गुप्तं ३ शुशुत्सया शोधितुमिच्छया ४ आशीः तालुगता जिव्हाआशीर्वादश्च ५ सुप्तिभूरुहः सुप्तिस्थान सन्निधवृक्षस्य. ६ सग्धिः सहभोजनं ७ आरालिकाः ओदनपाचकाः ८ निचोलितं आच्छादितं ९ परिणाह्यबध्वा.

तोनिधायतेपौरवास्तदनुसन्निधौगुरोः ॥ भक्तिभिर्व्यनमयन्निजंशिरः पार्षतस्तुपरिभूतिलज्जया ॥ ११ ॥ अथोगुरुर्नीतमाधिज्य
धन्वनापुरः प्रदेशंपुरुहूतमुनुंना ॥ तरंगिताक्षंनमवेक्ष्यविद्विषंवचोगभीरंवदतिस्मसस्मितः ॥ १२ गद्यं ॥ रेरेक्षत्रियसत्तमपुरा
महत्तरमग्निदेश्यमग्निवेश्यंमुनिमस्त्रपरिश्रमायप्रश्रयेणमहशुश्रूषमाणस्त्वंमत्कृतेपितुरनंतरंममाधिराज्यपदस्यप्रथममर्धंभवतेवि
तीर्यततः परमर्धमहमनुभविष्यामीतियद्यथाप्रत्यशृणुधास्तत्तथानिर्वर्तितंखलुधिग्विप्रमितिक्षुरप्रवरप्रायेणविप्रियवचनेनप्रथीय
सींममनसिव्यथांविनीर्णवतार्णक्रशनात्रतींवसुमतींस्वयमेवानुभवताभवता ॥ पद्यं ॥ आबालवृद्धंजडसक्तमेवजनाः समस्ताद्द्रु
पदंयदाहुः ॥ तस्मात्त्वयिस्वीकृततादृशाख्येकथंनुभज्येतनमित्रनेजः ॥ १३ ॥ गद्यं ॥ इतिव्याजस्तुतिवचनेनपौरवांतेभार्गवांते
वसताप्रधर्षितः पार्षतस्तेनसार्धमर्धराज्यपरिवर्तनमात्रमंगीकृत्यकृत्यविदांकर्कुदस्तौजंभरिपुकुंभसंभवावुभावप्युपयममेवप्रवर्त्त



१ अग्निदेश्यं अग्नितुल्यं २ अग्निवेश्यं अग्निवेश्याख्यं ३ अधिराज्य पदस्य राज्यस्य पक्षे आधिराज्यपदस्येतिपदच्छेदः तत्पक्षे आधिराज्यमिति पदस्य शब्दस्य अर्धंआधिं मानसीव्यथा. ४ रशना कांची ५ जडसक्तं जलसक्तं मूर्खासक्तंच ६ द्रुपदं वृक्षस्यमूलं पक्षे द्रुपद संज्ञा ७ मित्रनेजः मित्रस्य सूर्यस्य सख्युश्चतेजः ८ ककुदः श्रेष्ठः ९ जंभरिपु कुंभसंभवौ जंभरिपु संभवः अर्जुन कुंभसंभवः द्रोणः १० उपयमं विवाहं यमसमीपंच.

नुरागमप्राणस्यद्रोणस्यचरणयोरुपहारीचकार ॥ पद्यं ॥ सिंधुजातकलशीभुवोस्तयोः स्नेहभावमवलोक्यतादृशं ॥ तत्रपौरनिकरः समाचरच्चित्रपूरजठरेनिमज्जनं ॥ ७ ॥ कुमारास्तूर्णमारुरुक्षन्कुंभयोनेरनुग्रहात् ॥ कोटींकोदंडसारस्यगुणिनस्तेगुणाइव ॥ ८ ॥ कूलस्थस्यानुकुर्व न्कुरुसुतसदसः कुंभयोनेः कदाचित्स्नातुंमध्येजलानांचिरकृतवसतेः सिंधुभूवर्द्धमानः ॥ आदौपादौनिपीडयस्फुटकमलरुचौबिभ्रदंतेवसत्त्वंग्राहोजग्राहकश्चित्स्वयमपिविजयास्त्रागमांतंमहांतं ॥ ९ ॥ गद्यं ॥ ततस्तेसर्वोत्तराअपिशरासनेषुदक्षिणागुरुदक्षिणांकुरुतमह्यंद्रुह्यतोद्रुपदस्ययुधिबलाद्गृहीतस्यसमर्पणमितिगुरुणाचोदिताः सर्वेप्यहंपूर्विकयाविमतेषुकृतावज्ञसेनंयाज्ञसेनंपुरंनिरुध्यचिरमयुध्यंत ॥ प० ॥ कृत्तेभलैर्धनुषिमगुरुद्रोहिणस्तस्यजीवग्राहेबाहांचलपरिचलत्खड्गवल्लीसहायः ॥ पुत्रावल्यांसुबलदुहितुः पूर्वपक्षभिवत्यांसिद्धांतोभूद्दिविभुविचबुधैः श्लाघितः सव्यसाची ॥ १० ॥ पार्थमेवपुर

१ सिंधुजातः भीष्मः पक्षेसिंधूनां समुद्राणां जातंसमूहः २ कलशीभूः द्रोणः अगस्त्यश्च ३ कोटीं पारं अग्रंच. ४ सिंधुभूः भीष्मः नदीप्रदेशश्च ५ अंतेवसत्त्वं शिष्यत्वं समीपवर्तित्वंच ६ विजयास्त्रागमांतं विजययुक्तानांअस्त्राणां आगमः शास्त्रं तस्य अंतंपारं पक्षे विजयस्य अर्जुनस्य अस्त्रस्य आगमेन अंतनाशं. ७ उत्तराः उत्तर देशस्थाः श्रेष्ठाश्च ८ दक्षिणाः दक्षिणदेशस्थाः कुशलाश्च ९ पूर्वपक्षीभवत्यां असमर्थायां १० बुधैः देवैः पंडितैश्च.

त्वदिदिविदन्नपिधर्मसूनुस्तातस्यवाचमविलंब्यतथेत्यगृण्हात् ॥ नत्तादृशेषुगुरुशासनपालनेषुकूलंकषंगुणगणेनकुलंहिपारेः ॥ १७ ॥ धर्मभूरनुजैः साकंतद्गिरातत्पुरंययौ ॥ कर्मचोदनयाजीवः कायमन्यदिवेंद्रियैः ॥ १८ ॥ सविनयमथदर्शितंमहीयः सचिववरेण पुरोचनेनशत्रोः जतुगृहमभजंततत्रपार्थाजगदिवनूत्नमशेषवस्तुपूर्णं ॥ १९ ॥ तत्रतेविदुरभृत्यभाषितैः सौबलेयशतमन्युहेतुना ॥ पंचतामपिपरांधनंजयप्रापणेनजतुधाम्निमेनिरे ॥ २० ॥ शिशामयिपुरपिद्विषांसमंत्रीनिभृतशरारुरिमान्निगूढभावान् ॥ अवसरमनलावृतेनिकेतेप्रतिदिनमेधयितुंप्रतीक्षतेस्म ॥ २१ ॥ गद्यं ॥ जातुचिदपत्यैः सहपंचभिर्भृत्यभावमिषादमीषामामिषेषुविषंनिनीषंत्यानिषादयोषितइवतस्यपुरोचनस्यनिद्रायामपिद्राघिमाणंदातुकामेनतत्रसद्मनिक्षणदायामाशुशुक्षणिंक्षणान्निक्षिप्यजननीसोदरजननीचेतरंसंवेशसुखमीणमंचायमानभुजाशिखरसीमेनभीमेनविदुरकिंकरकृतालिंगयासुरंगयानिर्जग्मे ॥ पद्यं ॥ पार्थ

१ कूलंकषंपूर्णं. २ जतुगृहं लाक्षागृहं. ३ सौबलेयशतमन्युहेतुना सौबलेयः दुर्योधनः सएवशतमन्युः इंद्रः हेतुः कारणंयस्यतेन. ४ पंचतां पंचसख्यां मरणंच. ५ परां अन्यां. ६ धनंजयः अग्निः अर्जुनश्च. ७ निभृतशरारुः गुप्तघातकः ८ एधयितुं वर्धयितुं काष्ठानिकर्तुंच. ९ आशुशुक्षणिं अग्निं. १० संवेशः निद्रा. ११ सुरंगया भूतलांतर्गतगुप्तमार्गेण.

यितुंकृतनिवर्त्तनः सोम[1]कांतिकोपःस्यौपुत्रौभागीरथीतटवनावसथस्ययाजस्यमुनिराजस्ययाजनानुग्रहेणपरिजग्राह ॥ पद्यं ॥
तातोपिधर्मतनयंतपनीयपीठमारोप्यचक्षु[2]रिवलब्धममुंतपोभिः ॥ आवर्जितैः कलशवारिभिरभ्यषिंचदानंदबाष्पसलिलैरवनिंच
पौराः ॥ १४ ॥ आबिभ्रतोधरणिमंगदनिर्विशेषंनानाधनायतिभिरस्यनयोदिताभिः ॥ पस्त्यं[3]समस्तमपिवासवसन्निभस्यकोशी[4]ब
भूवकुतुकैः सहकौरवाणां ॥ १५ ॥ पारेसिंधुप्रथितममितंप्रत्यहंवर्धमानंसोढुंपार्थाभ्युदयमपटोः स्वात्मजस्यानुरोधात् ॥ प्रीतो
राजाप्यनुजतनयप्रेममार्गेप्रयातुंमातुर्दोषादिवबहिरगादंतरप्यंधभावं ॥ १६ ॥ गद्यं ॥ तदनुसौबलीजानिरसौबलीयसामर्षेणध
र्षितः सहजविनयंधर्मतनयमाहूयकृतावहित्थो[5]गिरमित्थमुत्थापयामास ॥ वत्ससंप्रतिवारणावतंपुरमुपेत्यवारणाननगुरोरुत्सवं
वारणायविपदांनिषेव्यसहानुजैस्तत्रवास्तव्योगिरापौरजनभुवास्तव्योनिरवधिसुखेनानुशाधिवसुधामिति ॥ पद्यं ॥ तस्याशयं

१ सोमः चंद्रः शिवश्च. २ अंधस्य नेत्रलाभः परमसुखदः तद्वदस्यापियुधिष्ठिरलाभइत्यर्थः ३ पस्त्यं गृहं. ४ कोशीबभूव भांडारंबभूव संकोचीबभूवच.
५ अवहित्थाआकारगोपनं.

कः स्वयंनरभुजामृषभोहिडिंबः ॥ अद्धांशभाक्जनवधेसममंतकेनतुल्याभिधानपदयास्वसृमान्मयायः ॥ २७ ॥ वीतशंकमिहते ऽद्यतिष्ठतः कीदृशं[1]ककुदमित्ययंमम ॥ चित्तरंगभुविनृत्तकौशलीमुत्तरंगयतिचित्रलामकः ॥ २८ ॥ रुधिरंपातुकामेनतेनवोहंतु मीरिता ॥ अधरंपातुकामाहमस्मिनेरूपसंपदा ॥ २९ ॥ अद्यतेसविधमापतेदसौत्वद्यमेतदुचितंवचः शृणु ॥ मारणंरिपुषुतन्व तामुनामा[2]रेणंकुरुमहान्बलेनसः ॥ ३० ॥ उपया[3]मविधौत्वरस्वमेकृपयामारशराः शरावः ॥ दिविवाभुविवाथदिक्षुवारमयेत्वा मुपनीयरंहसा ॥ ३१ ॥ इत्येनांभाषमाणांरजनिचरपतिः क्रोधलिंगैस्फुलिंगैर्दग्ध्वेवाक्ष्णोरभीक्ष्णंस्फुटघाटितभुजास्फोटवाचाटिता शः ॥ बिभ्राणोबभ्रु[4]कैश्यंत्वमिहवससिकोमृत्युवक्त्रार्धजग्धोदुर्बुद्धेनिष्ठयासिक्तपुनररितिगिरामेदुरः प्रादुरासीत् ॥ ३२ ॥ तस्मिन् रक्षांसि[5]नेदि[6]ष्ठेतादृक्षपरुषाक्षरे ॥ अपमृत्युरिवोदस्थादनिलस्यात्मसंभवः ॥३३॥ वृक्षेणवृक्षंगिरिणागिरींद्रंहस्तेनहस्तंवचसावचश्च ॥

१ ककुदं धैर्यं २ मारणं मेतिरणमिति पदद्वयं ३ उपयामः विवाहः ४ बभ्रु पिंगलवर्णं. ५ रक्षसीतिक्लीबत्वनिर्देशेन भीमस्याग्रे तस्य दौर्बल्यं व्यज्यते
६ नेदिष्ठे अंतिकतमे

द्विषां विग्रहमेकमेकं विभज्यसप्तापि शिखाः कृशानोः ॥ स्वीकृत्यतृप्ताः स्वशिरः प्रकंपैः शश्लाघिरेतत्रसमीरसूनुं ॥ २२ ॥ प्रपश्यतां पौरनृणां प्रभाते सांक्रामिकं रोगमिवाभितापं ॥ आबिभ्रतामश्रुभिरेवशांतिरापादितत्राग्निहठात्क्रियायाः ॥ २३ ॥ तत्रालये दग्धतनूनथैतान्निश्चित्यपार्थान्निजचारवाचा ॥ दुःखापदेशेनसुयोधनाद्याः संमोदबाष्पंसमृजुः सभायां ॥ २४ ॥ गद्यं ॥ तावत्सोपि गंधवहसूनुरंधतमसधुरंधरं सक्थिजवसमुत्थितमरुदुत्पाटिततरुविटपवमति विघट्टनसमुद्भ्रांतशकुनकुलबद्धनिध्वानमध्वानं विलंघ्यकस्यचित्काननकासारतीरतरोरधिपरिसरमेतानवतार्यनदीयपरिरक्षणजागरविचक्षणः क्षणमवतस्थे ॥ पद्यं ॥ तत्रकापि तरुणीतडिदाभातंयुयौजतुगृहेसुहितेन ॥ चूषणायतमसांवनमार्गेचोदिताहुनवहेनशिखेव ॥ २५ ॥ अधरोष्ठविभागरेखिका सुदृशोस्यावदनेस्तिवानवा ॥ इतिसात्वदितस्यसंशयंपरिमार्ष्टुंकिलमौनमत्यजत् ॥ २६ ॥ एनांप्रशास्तिभुजयावनराज्यसीमामे

१ विग्रहं शरीरं. २ सांक्रामिकं सांसर्गिकं. ३ सुहितेन तृप्तेन. ४ चूषणाय शोषणाय.

त्सुः ॥ पद्यं ॥ भिक्षामटद्भिरथतत्रपृथातनूजैरर्धंविभज्यपृथगर्पितमन्नराशेः ॥ आकंठमभ्यवहरन्नाखिलैः प्रतीकैः पुत्रोबभूवमरु
तः पुनरुक्तपोषः ॥ ३७ ॥ तत्रतत्रद्विजैरेतेपृष्टानाशंपृथाभुवां ॥ इत्यूचुर्वयमत्रैवविघ्नस्तेषांतुसंस्थितिं ॥ ३८ ॥ यक्षेणकेनापिह
तोहिडिंबइतिब्रुवाणेषुमिथोद्विजेषु ॥ आकूतगर्भहसितंमगम्यश्चक्रुर्मुखंवीक्ष्यसमीरसूनोः ॥ ३९ ॥ गद्यं ॥ एकदासायमंतर्गृहे
निरवग्रहंनिष्पतद्भिर्बाष्पैस्तरंगितोत्तमांगमपत्यमुत्संगभुविपुरोधाययातुधानापराधभयानुरोधिनमंदितंक्रंदितमुत्सृजंतींकुंतीसमुप
सृत्यविषादनिदानंविप्रायतताक्षीमप्राक्षीत् ॥ सापितांकृपालुतयात्द्दिलगद्गदांगद्गदाक्षरमाचचक्षे ॥ पद्यं ॥ साधयेयमितिधर्मसंग्र
हंसंदधातिमिथुनंपरस्परं ॥ आधयेपरमनेकजन्मनोरावयोरजनिपापसंग्रहः ॥ ४० ॥ अयिकिंब्रवीमिपरिपाकमंहसामतिभीषणो
बकइतिक्षपाचरः ॥ स्वसुरादरात्स्वयमिवागतोयमोयमुनावनांतमवलंब्यवर्तते ॥ ४१ ॥ माभून्नाशोयुगपदितिनोभीरुभिर्जातु

१ प्रतीकैः अवयवैः २ संस्थितिं स्थितिं नाशंच. ३ आकूतं अभिप्रायः ४ विप्रायतताक्षीं विप्रस्य आयताक्षीं दीर्घनेत्रां स्त्रियं ५ [illegible]दां संजात हृद्रोगां.

परस्परेणप्रतिरुध्यघोरंसमीकमेतौसममादधाते ॥ ३४ ॥ स्वसुः समक्षंस्वयमेवमुष्ट्यावलँविडौजाइववज्रसख्या ॥ हिडिंबमेनंय
मराजधानींकुटुंबिमुख्यंकुरुतेस्मभीमिः ॥ ३५ ॥ गद्यं ॥ तदनुतिमिरकदंबेनेवहिडिंबेननिर्मुक्तात्तस्मादहर्मुखादिववनमध्यात्सं
ध्ययेवसरागयातयाकमलपालिकयासहतपनभानवइवराजसूनवस्तेनिष्क्रम्यशालिहोत्रमुनेः सदसिवीतिहोत्रभासंव्यासंभगवंत
मासेव्यतत्रतन्निदेशादहानिकानिचिदतिवाहयांचक्रुः ॥ ५० ॥ पुत्रंतत्रघटोत्कचंपवनभूसंगादनंगातुराप्राप्तंसर्वगुणैर्मनोजवस
तांप्रासूतनक्तंचरी ॥ कुर्यांवः स्मृतएवकर्मसुहरेः शक्तेरपिस्त्वंसनामित्युक्त्वासपितृन्यथाभिलषितंयुक्तस्तयानिर्ययौ ॥ ३६ ॥ गद्यं ॥
ततस्तेवन्याशनैर्धन्याधारितवसुधासुधाशनाकृतयः प्रावृषमिवबकवलाक्रांतांपातालजगतीमिवप्रत्यहंवर्धमानवलिशोकामंग
राज्यसीमामिवसूर्यतनयानुकूलप्रतिष्ठांरविरथाक्षधुरमिवैकचक्रांपुरींक्रमादाक्रम्यकस्यचिद्गृहमेधिनोगृहमध्यमेत्यसुखमध्यवा

१ सरागया प्रीतियुक्तया आरक्तयाच. २ कमलपालिकया हिडिंबया. ३ मनोजवसतां पितृसमत्वं. ४ वसुधासुधाशनाकृतयः वसुधायां पृथिव्यां येसुधाशनाः देवाः ब्राम्हणाइत्यर्थः तेषां आकृतिः धृता यैस्ते. ५ बकवलाक्रांतां बकासुरस्य वलेनशक्त्या अधिष्ठितां पक्षेबकाः बकपक्षिणः वलाः वायसाश्चतैः व्याप्तां. ६ बलिः दैत्यः दैतेयश्च. ७ सूर्यतनया यमुना पक्षेसूर्यतनयः कर्णः ८ एकचक्रां एकचक्रवर्ती पक्षेतन्नाम्नीं.

नंदकरेभगवतिदिनकरेमंदेहकुलमवस्कंदितुमुदयगिरिशिखरमधिरूढे ॥ पद्यं ॥ सशाकटमधिरुह्यभीमसेनोदधिकलशीकुलशे
खरान्नराशिं ॥ बकभवननवनंविवेशशाखानगरमिवांतकवीरराजधान्याः ॥ ४८ ॥ कंकालोच्चयकल्पितांतकचमूशाटीकुटीविभ्र
मेतत्रकुद्धतदौपवाह्यमहिषश्वासोग्रचक्रानिले ॥ गृध्रध्वांक्षसृगालघोषविकसद्रक्षोपदानस्तवेभुंजानः शकटस्थएवसतदाचक्रेम
हत्क्ष्वेडितं ॥ ४९ ॥ गद्यं ॥ सोपितदिदंनिशम्यबलिपुरुषविशेषभारमंदितशकटागमेनप्रथममेवकृतोन्मेषंरोषंद्विगुणयन्गिरिकंदर
मंदिरमुखात्सरभसंविनिर्गत्य ॥ पद्यं ॥ एवंकोवापराध्नोत्यमुमविगणयन्बाहुमत्रेऽतिघुष्यन्व्यक्तोरोरक्तरेखाकृतबिरुदजगद्घातु
कत्वप्रशस्तिः ॥ क्रोशंन्मर्त्यांगखादत्वरणपरिचलत्सृक्कलग्नास्थिदंडस्थूलेदंष्ट्रेदधानः पवनभुवमभिप्राद्रवद्यातुधानः ॥ ५० ॥
निजभुजयुगलीनिर्यंत्रणाभिर्नियमितयत्नपरस्परावुभौतौ ॥ निगडितनयनंनिलिंपपंक्तेर्निरवहतांनिपुणंनियुद्धशिल्पं ॥ ५१ ॥

१ मंदेहाः राक्षसाः २ शाखानगरं वाडीतिप्रसिद्धं. ३ अपदानं कृतंकर्म. ४ नियंत्रणाभिः नियमनैः ५ निगडितनयनं बद्धनेत्रं. ६ नियुद्धं बाहुयुद्धं.

पौरैः पूर्वैर्लब्धावसरमसकृत्प्रार्थनाभिः प्रक्लप्तं ॥ एकैकस्मिन्नहनिवितरत्येकमेकंपुमांसंकृत्वातस्मैबालिमिहजनंस्तुंगमन्नस्यराशिं ॥ ४२ ॥ तादृशः प्रलयकालकठोरोवासरः सतुममालयभूमेः ॥ द्वारितिष्ठतिबकात्परितुष्टात्पारितोषिकमिवाद्यजिघृक्षुः ॥४३॥ बालानिवप्रवयसोपिनराशनोयंभुंजीतचेन्ममसएवहिपुण्यपाकः ॥ बालेनभाव्यमिनितद्बलिपुव्यवस्थाकंठेपुनः कलयतेक्रकचे[2]स्यधाटीं ॥ ४४ ॥ संतानमूलमिदमेकमपत्यमास्तेसंवर्त्तकालसहजश्चसराक्षसेंद्रः संभूयनेचसमयः क्षपयाम[3]हत्यासंनर्यितांकथमियंसखिमेविपत्तिः ॥ ४५ ॥ ग० ॥ इत्युदीर्यसरभसावगाहनत्हृदयसमुत्[4]कूलितशोकसरः पूरमिवनयनसलिलंविशृंखलंखेलयंत्यैतस्यैतनयेषुद्वितीयः समरेषुद्वितीयः सुतः सखिमयातेदीयतेसएवतत्प्राण[5]नाशने[6]बलीभविष्यातिमाभैषीरितिसानरदेवमाहिषीप्रत्यश्रौषीत् ॥ पद्यं ॥ अनयोरथदंपत्योरश्रुहेतोः शुचः पदे ॥ आनंदस्यातिरेकोभूदादेशइवतत्क्षणं ॥ ४६ ॥ तमिमंप्रसुवारहस्यु[7]दंतंगादितोवायुसुतोबलावलेपात् ॥ मनसानबकंलिलेहरात्र्यार्मनसाधारिनमन्नराशिमेव ॥ ४७ ॥ गद्यं ॥ अपरेद्युरखिलजना

१ पारितोषिकं संतोषेण यद्दीयवेतत्. २ क्रकचस्य करपत्रस्य करवतइतिप्रासिःधं. ३ महत्या दुखनेदीर्घया. ४ समुत्कूलितः कूलमतिक्रांमतः ५ प्राणनाशने प्राण्यते जीव्यते अनेनेति प्राणनं यदशनं पक्षेप्राणानांनाशने. ६ बलीभाविष्याति देयोभागः भविष्पति पक्षेबलाद्यः ७ उदंतं वृत्तांतं. ८ अनसा शकटेन.

त्वासुधयैवनिर्मितांतां ॥ पथिभूसुरयूथमध्यभाजः प्रतिपांचालपुरंप्रतस्थिरेते ॥ ६० ॥ गद्यं ॥ तेपुनरनेकदिननीतजनपदवन
सीमानः पथिकृतोदयेनभगवतापराशरदायादेन[1]जतुसदनपरिच्यवनेन[2]नवोनवोहर्षः पार्थतस्यसमुन्मिषतीतिगिराऽनुगृहीताः सा
क्षात्प्ररोहताभुजप्रतापानलेनैवफाल्गुनकरवल्गितेनमहताऽलात[3]तेजसानिशि नितांतसीमं तितसंतमसयापदव्यात्रिविष्टपतटिनीं
प्राविक्षन् ॥ तत्रखलु ॥ पद्यं ॥ इंदीवरात्प्रतितरंगमनुप्रविष्टैर्बिंबैरिवाब्धिदुहितुस्तरुणीकदंबैः ॥ क्रीडन्समंपयसिचित्ररथोवि
लोक्यपार्थान्रुरोधकुपितः प्रधनं[4]चिकीर्षुः ॥ ६१ ॥ अस्त्रमात्मसमनाम[5]दैवतंसंप्रयुज्यसमरेधनंजयः ॥ तत्रतस्यरथमग्रवर्तिनंजा[6]
तुषालयसहायमातनोत् ॥ ६२ ॥ गंधर्वाणांपत्युर्गर्वजुषः सौरसैंधवे[7]तस्मिन् ॥ पाथसिभंगः[8] शिशिरोरोधसिभंगस्तुतापहेतुर
भूत् ॥ ६३ ॥ सख्यस्यलाभात्सपदिप्रहृष्यन्कुशीवलेंद्रः कुरुनंदनानां ॥ प्रादर्शयत्स्वांप्रथमंविनीतिंपश्चादमीषांपद्धवींचर

१ दायादेन सुतेन २ परिच्यवनेन निर्गमनेन. ३ अलातं साग्निकाष्ठं ४ प्रधनं युद्धं ५ आत्मसमनाम आत्मना समंनाम धनंजयेति यस्य अस्त्र मित्यर्थः
६ जातुषालयसहायं लाक्षागृहसमं दग्धमित्यर्थः ७ सौरसैंधवे सुरसिंधोः भागीरथ्याः संबंधिनि ८ भंगः पराभवः लहरीच.

पुत्रस्यवायोर्भुजदौर्ललित्यंबकंवनेतत्रचिरंचरंतं ॥ निन्येदशांकामपिराक्षसस्त्रीनेत्राभ्रवर्षर्तुविलासयोग्यां ॥ ५२ ॥ तंविकृष्यपुर
सीम्निनिशीथेतत्क्षणात्कुणपमर्शनदोषं ॥ मार्ष्टुकामइवमारुतसूनुर्मातुरंघ्रिमुपसेवितुमागात् ॥ ५३ ॥ आलोक्ययातुशवमेतद
शेषपौरैरन्होमुखेपरवशीक्रियतेस्मचेतः ॥ आश्चर्यपूरपरिमेलनफेनिलाभिरानंदसागरतरंगपरंपराभिः ॥ ५४ ॥ भवनमेत्यतदागृह
मेधिनः पवनजेप्रवणीकृतमूर्द्धनि ॥ प्रयुयुजेसममाशिषमक्षतैः प्रमुदितः पुरितत्रमहाजनः ॥ ५५ ॥ निशिजातुनिकेतवेदिका
यानिकटेसुप्तिसुखंनिषेव्यपार्थान् ॥ पथिकोपररात्रजागरूकः प्रबभाषेगिरमीदृशांप्रसंगात् ॥ ५६ ॥ पांचालिकांयुवमनोरथरत्न
सौधपांचालिकांत्हृदिममेतिममेतिकृत्वा ॥ अद्यस्वयंवरमहायनृपाः प्रयांतिदूतैः समंद्रुपदभूपतिराजधानीं ॥ ५७ ॥ भोक्तुम
न्नमपिसूपसमग्रंदोग्धुमप्यभिनवप्रसवागाः ॥ लप्स्यनेद्विजगणोपिचतस्माद्वत्सलाद्दुहितुरुत्सवकाले ॥ ५८ ॥ नहितत्रभवेदपा
र्थताविजयः सिद्धिमुपैष्यतिस्फुटं ॥ युगपत्सुखमस्तुवोमहत्द्रुतमागच्छततन्महौजसः ॥ ५९ ॥ इतिवाचमुपश्रुतिंद्विजातेर्द्रादिक्

१ कुणपःशवं. २ पांचालिकां पुत्तलिकां ३ महाय उत्सवाय ४ अपार्थता व्यर्थत्वं पांडव राहित्यंच ५ विजयः गमनोद्योगः अर्जुनश्च ६ युगपत् पंचानाम पित्रीप्राप्ति सुखं एकस्मिन्नेवकालेभवतुइतिगूढाशीः ७ उपश्रुतिं शुभशकुनं.

मतः कृत्यतश्च ॥ ७१ ॥ बिभ्राणोमणिदीप्तकुंडलधरंकर्ण[1]त्रयंपार्श्वयोरग्रेचातिमनोज्ञरूपमखिलेष्वंगे[2]षुदुर्योधनः ॥ सेनादुंदुभिना
दतुंदिलनभाः स्वस्यानुबिंबायितैरासीदत्सनवाधिकैः परिवृतप्रांतोनवत्यानुजैः ॥ ७२ ॥ तदनुपरितः कीर्णैः पुष्पैस्तरंगितसौ
रभंमणिमयमहामंचारूढावनींद्रपरंपरं ॥ अगरुजनितैर्धूपैरालिह्यमानवितानकंस्वनितपटहंप्रापुः पार्थाः स्वयंवरमंडपं ॥ ७३ ॥
जाग्रत्सोमककीर्तिसोमनिमिषत्पद्मावकाशात्ययप्राप्तेंदीवरनित्यवासघटितश्यामप्रभाश्रीरिव ॥ पांचालस्यसुताततःपरिजनैः सा
र्धंपुरः पश्यतांराज्ञांबुद्धिमिवाधिरुह्यशिबिकांरंगस्थलींप्राविशत् ॥ ७४ ॥ द्रौपदीमुखशशिद्युतिसंपत्कौमुदीमहतिरंगतटाके ॥
पक्ष्मचक्र[3]युगुलंनृपतीनांतत्क्षणंविजघटेवहुदूरं ॥ ७५ ॥ तांपश्यतस्सदसितस्यमहासुराणांवामेतरेमहतिवासवनंदनस्य ॥ अंत
र्बलस्यसपदिप्रकटीबुभूषोरुद्वल्गनं[4]किलभुजेस्फुरणंबभूव ॥ ७६ ॥ गद्यं ॥ तावत्सरभसंसमुपेत्यसाक्षादादेष्टुमनाः प्रद्युम्नइवधृ
ष्टद्युम्नः सायकैः साकंसकाशमुपनीतंस्वयंवरादिदृक्षयासपरिवारंप्रत्यासन्नमिवपन्नगपतिंचापंपुरस्कृत्यकन्यावलोकनधन्यान्रा

१ कर्णत्रयं द्वौकर्णौ राधेयश्च २ अंगेषु देशविशेषेषु अवयवेषुच. ३ चक्रयुगलं चक्रवाकयुग्मं ४ उद्वल्गनं उद्गमनं.

म्यां ॥ ६४ ॥ धर्मभूरथसहोदरैः समंधौम्यमध्वनिसमीक्ष्यविश्रुतं ॥ प्राणिनामयमहिंसकोऽपिसन्[१]पादपीडनममुष्यकृतवान् ॥ ६५ ॥
यथातिथ्यविधौप्रीतः सपुरस्[२]कुरुतेस्मतान् ॥ तथाध्वगमनेतेऽपितंप्रश्रयवशंवदाः ॥ ६६ ॥ धौम्यस्यसुधामधुरिमधौरेयीभिः स्वयंवर
कथाभिः ॥ द्रुपदपुरसरणिरेषांद्वित्राण्यभवत्पदानीव ॥६७॥ भूदेवेषुतिनिबिडेषुमध्यभाजांपंचानामपियुगपत्पृथासुतानां ॥ पुस्फोर
द्रुपदपुरंपुरः प्रदेशेवक्त्राब्जेसरभसमक्षिदक्षिणंच ॥६८॥ कुमारिकायाद्रुपदस्यभूपतेः कुचोपमाद्रव्यमिवाभिवीक्षितुं ॥ कुरूद्वहास्त
त्रपुरेकुतूहलात्कुलालगेहंप्रथमंसमाविशन् ॥ ६९ ॥ तामागमन्नथपुरींशतशः ससैन्यास्स्मारंयुगोदयमिवाद्भुतमावहंतः ॥ भूपा
स्तुताभुजमुदस्यपठद्भिरग्रेपद्यंनिबद्धबिरुदंपटुबंदिवृंदैः ॥ ७० ॥ द्यावाभूमीनिरुंधन्यदुबलरजसांश्रेणिभिः सीरपाणिर्वेगादागा
त्सवीरः स्[३]वैविनयगुरुणाशौरिणान्वीयमानः ॥ आहारश्चायुधंचद्विषदवमतयेयेनसंसेव्यमानेतेद्वे[४]हालाहलत्वंरणभुविवहतोना

१ पादपीडनं पादपीडां पादसंवाहनंच २ पुरस्कुरुतेस्म आतिथ्यंचकार पक्षे वचन विपरिणामेन अग्रेअकुर्वन्. ३ स्वविनयः स्वाभाविकः विनयः
४ हालाहलत्वं हालामद्यंहलंसीरं तयोर्भावः हालाहलत्वं विषत्वंच.

वैरिभुवस्तयाधिकंठंवरणेचंपकमालिकावितेने ॥ ८३ ॥ गद्यं ॥ तदनुसमहावीराग्रेसरः समग्रगुणशेखरितांनरपतिसुतामिवशा
वैरिभुवस्तयाधिकंठंवरणेचंपकमालिकावितेने ॥ ८३ ॥ गद्यं ॥ तदनुसमहावीराग्रेसरः समग्रगुण[1]शेखरितांनरपतिसुतामिवशा

रासनलतामुद्वहन्[2]राज्ञांबलमवज्ञायसभांगणात्क्षणान्निश्चक्राम ॥ तदात्व[3]एवखलोऽयमखिलानस्मानतिस्मयेनविस्मरन्कस्मैचि

द्दुहितरंविप्रायप्रायच्छदितिद्रुतंद्रुपदायद्रोहमुन्निद्रयतः कतिचनराजन्यान्जन्य[4]ाभिमुखान्प्रतिमुलभोन्मेषणरोषेणसरभसभुजोन्नी

तैरुपवीतैः कंठमावेष्ट्यममायंयष्टेमंमायांविष्टरस्यलक्ष्यमितिवचनेनजातिचापलंकुर्वाणान्धरणिगीर्वाणान्भवतांपुनराशिरिवजय

राशीकरणायालमितिसस्मितंनिवर्तयन्नमर्त्यपतिकुमारोऽपिसमारोपितधनुर्गुणनिरर्गलनिर्गलितेनशरनिकरेणतेषांपरेषामधिकां

दिशिदिशिकांदिशीक[5]तांदिदेश ॥ तावदस्यराजमंघस्यजंघालतामनुकुर्वद्भिरिवरथार्वद्भिरपरार्णवाभ्यर्णमवतीर्णवतितूर्णमर्णो

जबंधौ[6]तेननिहितांदीप्तिमपरामिवनांदयितामनुरंजयन्नयमपिधनंजय[7]स्तामेववासभुवमाससाद ॥ पद्यं ॥ स्वेदांबुभिर्निटिलजैः

१ गुणः मौर्वी सौंदर्यादिश्च २ उद्वहन् वहन् विवाहंकुर्वन् ३ तदात्वे तत्काले ४ जन्यंयुद्धं ५ कांदिशीकः भयपलायितः ६ अर्णोजबंधौ सूर्ये
७ धनंजयः अर्जुनः अग्निश्च.

जन्यानेवमवादीत् ॥ पद्यं ॥ बाणेनसंप्रतिनृपादिविलक्ष्यमेतत्तच्छायवद्भुविनिपातयितुंपटुर्यः[1] ॥ मौर्वीमिमामिवसदाक्षिणएवपाणीकुर्यात्स्वैसारमभिदर्श्यममस्वसारं[2] ॥ ७७ ॥ इत्थंप्रगल्भमुदितारभसेनपीठादुत्थायचापमुपसृत्यकरेपिकृत्वा ॥ आत्मानमेवकृतयत्नमनैषुरार्तिं[3]मौर्वीलतांनतुमहीपतिपंक्तयस्ताः ॥ ७८ ॥ दृष्ट्वाथराजकमिदंद्विजसंघमध्यान्निर्गत्यसंसदिनिलिंपपतेः कुमारः ॥ चापेशरंकरधृतेसमधत्तलज्जांभूपेषुभूरिकुतुकंपुरुषेंद्रपुत्र्यां ॥ ७९ ॥ वीरेणतेनाविशिखेनविलूनमूलंचक्रभ्रमेणपतयालुतदाशरव्यं[4] ॥ अस्मिन्समाजवलयेत्वयमेवदोष्मानित्याहिताभिनयलीलमिवाबभासे ॥८०॥ निष्पतत्सुरकरांजलिपुंजात्पुष्पवर्षमभितःकुरुवीरं ॥ मंदहासइतिविक्रमलक्ष्म्याः संदधेसकलचेतसिबुद्धिं ॥ ८१ ॥ पांचालपुत्रीप्रहिताः कटाक्षाः पांडोस्तनूजंपरितोववल्गुः ॥ मांगल्यमालावतरेदिहेतिमाध्वीलिहः[5] पूर्वमिवोपयाताः ॥ ८२ ॥ जन्मांतर[6]नेत्रवारिसृष्टत्रिपथाहेमपयोजगुंफितेव ॥ बल

१ तस्यच्छायातच्छायं तद्वत् २ स्वसारं स्वस्य सारंबलं पक्षेस्वसारं भगिनीं ३ आर्तिं पीडां धनुष्कोटिंच पंक्तयः इतिस्त्रीत्वनिर्देशेन पराक्रमाभावः सूचितः ४ शरव्यं लक्ष्यं. ५ माध्वीलिहः भ्रमराः ६ जन्मांतरे अस्याः रोदनेन भागीरथ्यां पतितैर्नेत्राश्रुभि र्हैमकमलानि उत्पन्नानीतिकथा सापेक्षेय मुत्प्रेक्षा.

परिवेषस्यशिशूसमीपभाजौ ॥ ९० ॥ ताटंकेतरलमणिप्रभातरंगेतन्वंग्यामुखमभितस्तदाव्यभातां ॥ मूर्त्तत्वंप्रकटमुपेत्यजागरूकेवर्णद्वेनयनविपाठयोरिवांत्ये ॥ ९१ ॥ सख्याः करोंजनविधौसकृदेवगंतुमापांगभागमपटुः श्रममानशेय ॥ रेखावधेरनवगामितयादृगंतंपूर्वाक्तमेवसपुनः पुनराललंबे ॥ ९२ ॥ सकलमपिवपुर्विभूष्यतन्व्याः सपदिसखीविपुलेक्षणांबुजापि ॥ चिरतरमनवेक्ष्यमध्ययाष्टिंकरधृतकांचनकांचिरेवतस्थौ ॥ ९३ ॥ कांचीकलापमणिबिंबितपार्श्वयोषित्कौशेयपंक्तिरवनींद्रसुताबभासे ॥ आविर्भविष्यदधिगोष्ठिकटीनिमग्नंवासः शतंजनदृशामिवसूचयंती ॥ ९४ ॥ आतंकपीडामददांपुराहमस्याद्भुतंभाविपुवल्लभेपु ॥ एवंविचिंत्येवभयेनपादेलाक्षाकृतंधाँमपपाततन्व्याः ॥ ९५ ॥ तस्याः सखीपुसकलास्वपितत्तदंगंवेगाद्विभूषितवतीषुविवाहवेषैः कालक्षिपासहनवृद्धपुरोहितानांकोपस्यपात्रमभवत्कुचाशिल्पकर्त्री ॥ ९६ ॥ गद्यं ॥ एवमलंकृतामेनामवलोक्यस्वयमपि



२०

२०

१ परिवेषस्य परिधेः २ वर्णठकारी ३ नयनविपाठयोः नेत्रबाणयोः ४ अनवगामितया अज्ञतया ५ पूर्वाक्तं पूर्वअंजनलिप्तं. ६ आतंकः तापः ७ घमर्मपृ कांतिश्च.

पदयोःसवित्रीमार्द्रीचकारसतयासहचापपाणिः ॥ मोदांबुभिर्नयनजैस्तमियंचमौलौविस्मेरचेतसिकुलालवधूसमाजे॥ ८४॥ कुवलयदृशः कुंभंजिग्युः कुचैरितिभाषितैः करिवरशिरः कर्मेत्येवप्रहृष्टमनाश्चिरं ॥ द्रुपददुहितुर्दृष्ट्वातुंगौकुलालपतिः कुचौनिजमपिघटंनिश्चित्यैवंनितांतमलज्जत ॥ ८५ ॥ अन्येद्युर्गृहमुपनीयपूजितांस्तान्व्यासोक्त्याविदितवरः पुरामरातेः॥ पंचापिक्षितिपतिनंदनान्सुतायाः पांचालोनिशिपरिणीतयेऽनुमेने ॥ ८६ ॥ गद्यं ॥ ततः परमोद्दृशोत्सवश्रवणात्परमानंदमनुभवंतीभिरंतः पुरिकाभिः परिवृतांतांसखीजनामंडनमंडपिकामुपनीयप्रसाधयितुमारभंत ॥ पद्यं ॥ द्रौपद्याः पंचपत्नीत्वेद्रष्टुंलिपिमिवोत्सुका ॥ सीमंतशिल्पव्याजेनशिरोजान्व्यभजत्सखी ॥ ८७ ॥ मृगमदतिलकंरराजतन्व्यामुखशशिनामहसाबलाद्धृतायाः ॥ चिकुरमिषजुषोऽपराधशांत्यैनमितमपत्यमिवांधकारवंद्याः ॥ ८८ ॥ अधिनामिकाशिखरमाकलितंनवमौक्तिकंनरपतेर्दुहितुः ॥ शुशुभेमुखांबुरुहमध्यचरस्मितहंसिकाजनितमंडमिव ॥ ८९ ॥ सुतरांजनमोदमादधानेमुदृशोमौक्तिकरत्नकर्णपत्रे ॥ परिचेतुमिवाननेंदुसेवां

१ एवंकर्मइति २ प्रसाधयितुं अलंकर्तुं ३ सीमंतः केशवेशः ४ बंद्याः कारागृहवासिन्याः

लवः किलपृथासुताः क्रमात्परिचक्रमुर्हुतभुजंवधूसखाः ॥ १०० ॥ कठिनत्वसंपदवलेपभरात्कुचकुड्मलस्यकुरुवीरवधूः ॥
कृतानिर्जयेवपतिपाणिधृतंपदमश्मनः शिरसिसानिदधे ॥ १०१ ॥ कन्यायाभ्युपहृताविधिलाजाः कंदलत्यनलरोचिषिपेतुः ॥
पंचवल्लभकराग्रविमर्दोद्गाहुवंशगलिताइवमुक्ताः ॥ १०२ ॥ विधिचोदनासुमणिदीपयष्टिकापरितः स्फुरत्प्रतिकृतेश्वसुभ्रुवः ॥ उभ
योविवेचनविधौपुरोधसः स्खलनंबभूवनतुमंत्रतंत्रयोः ॥ १०३ ॥ बाहुप्रतापइवसाक्षिणिहव्यवाहेसामंतराजधरणेरिवयाज्ञसे
न्याः ॥ कांक्षोसमंक्रमशएवकरंगृहीत्वाहर्षेणवृद्धिमभजन्नवनींद्रपुत्राः ॥ १०४ ॥ पांचालराजश्चसपांडवश्चपुष्यत्तमौपूजकपूज्य
भावं ॥ आढ्यंभविष्णुत्वमाकिंचनत्वंव्यत्यास्थतांताविवयौतकैः स्वैः ॥ १०५ ॥ गद्यं ॥ एवमंतरिक्षनिक्षिप्तलक्ष्यवेधनलक्षणेन
शुल्कनिष्केणनिजकंठनिष्कायितकन्याभुजलतानेतान्पाथिकौंतेयानवगंतारोदुरहंतासे पितानिवर्तनमतयोविकर्तनतनयोपायविधे

१ प्रविकृतेः प्रतिबिंबस्य २ कांक्षासमं अगुष्ठमेवगृण्हीयाद्यादिकामयीत पुमांमएवमेपुत्राजायेरन्नित्यंगुलीरेवस्त्रीकामोरोमांतेहस्तंसांगुष्ठमुभयकाम इतिगृह्योक्त
कामानुकूलं. ३ यौतकैः पारिबर्हैः अहेर इतिप्रसिद्दं. ४ निष्कंपदकं.

संध्या[illegible]संपादितलाक्षाकल्यामंजनैतिलकमंजुलमुखभागांपरिणेतुमिवप्रतीचींदिशमुपगतवतिभगवतिभासांनिधौ ॥ पद्यं ॥
तस्यामेवक्षपायांसपादिनिजकुलोत्तंसपार्थोत्सवानामालोकायेवसाक्षाद्विशतिहिमरुचौद्यांशुभंयौमुहूर्ते ॥ सोपानैरथ्यरुक्षन्मणि
गणखचितैर्वेदिमेतेकुमाराः सालंकाराः पुरोधः सरभसनिहितैः संविधानैः समग्रां ॥ ९७ ॥ ग० ॥ तत्रमुहूर्तगुणेष्विवसमंतादो
जायमानेषुदीपेषुमंत्रविदांवदनेष्विवशब्दायमानेषुवाद्येषुकुलपालिकाः कमनीयमणिनिकायकोरकितैः कनकभूषणैरविकृतसह
जरामणीयकांकन्यकाममीषांसकाशेनिवेशयामासुः ॥ पद्यं ॥ पूतपार्श्वेकुशांकूरैः पुरस्तान्मणिकुट्टिमे ॥ प्राज्वलत्तस्यधौम्यस्य
प्रतिबिंबमिवामलः ॥ ९८ ॥ धर्मान्प्रजाश्चसहसंचिनुतानयेतिशाम्यत्समिच्चटचटात्कृतिभिर्ब्रुवाणः ॥ तामात्मजांद्रुपदराजइ
वानलोपिप्रादादिवोन्नतशिखाग्रकरेणतेभ्यः ॥ ९९ ॥ अथजातुषालयसमर्पणात्कृतंपरिपोषमस्यवपुषोभिवीक्षितुं ॥ स्पृहया

१ अंजनतिलकः अंजनः प्रतीचीदिग्गजः पक्षे दृष्टिनिवारणार्थं यत्कज्जलंधार्यतेस अंजनतिलकः अंजनंचातिलकश्चेतिवा २ शुभंयुः शुभान्वितः तस्मिन्
३ संविधानैः उपकरणैः ४ कुलपालिकाः कुलस्त्रियः ५ कुट्टिमेवेदिकायां.

परस्परंपर्यहरन्प्रहारान् ॥ १११ ॥ सोमकेष्वपसर्पत्सुसूर्यसूनोः शितैः शरैः ॥ कूजयामासकोदंडंकुकुशायुधनंदनः ॥ ११२ ॥
॥ गद्यं ॥ तेनजननइवप्रधनेऽपिवृकोदरद्वितीयेनकरोदरपरिकर्मीकृतस्यकार्मुकस्यवर्मनिर्माथिभिः शरोर्मिभिर्निर्मितेर्मर्ममर्मागर्भीभयप्रसारिभिः स्वेदवारिभिः पदान्येवयानपदेऽभिषिंचंतः समराजिरकंदलितपार्थयशश्चतुर्थीचंद्रकलावलोकनंपरिहर्तुमिवमुखंनिवर्त्यसौबलेयाः केवलैरेवबाहुभिः कुरुपटभेदनंप्रतिपलायांबभूवुः ॥ पद्यं ॥ बीभत्सुचापविवृतेषुमहत्सुकर्मस्वेकंदृढंजगृहिरेयुधिधार्तराष्ट्राः ॥ वीक्ष्यास्थितेषुविमतेषुविलोलजीवंपृष्ठंप्रकाश्यगमनंपृथुनाजवेन ॥ ११३ ॥ विजयात्परमेतेषामृजवोप्यरिभीषणाः ॥ सद्योगुणाः समुन्नेमुरवनेमुश्चधन्वनां ॥ ११४ ॥ तेनिवृत्यनगरंसमाविशन्भूषिताद्रुपदराजपूजया ॥ वन्यशेषजनकेनशौरिणाजन्यभावमुपजग्मुषासमं ॥ ११५ ॥ पार्थएवसहजेष्वखिलेषुप्रायशोयुधिबलंश्रुतवत्याः ॥ अन्वभूदधिकमीक्षणवृष्टेराज

१ आख्या वेपुत्रनामासीविश्रुत्या सूर्यसूनुसकाशादपि सोमपलायनं युक्तं. २ परिकर्मी कृतस्य धृतस्येत्यर्थः ३ निर्मितेर्मर्ममर्माणः निर्मितानि उत्पादितानि र्मीणि व्रणानि येषुतादृशानि मर्माणि येषांते. ४ विलोलजीवं विलोलाः चंचला जीवा मौर्वी प्राप्याश्च यस्मिन् कर्मणि ५ गुणाः शौर्यादयः मौर्व्यश्च. ६ जन्यभावं उत्पाद्यत्वं वरस्य स्निग्धत्वंच.

यैः सहायैः सहसंमंत्र्यसमारब्धपूर्वस्ययुद्धपलायनाध्ययनस्यद्वितीयावृत्तिविच्छित्तिंपरिजिहीर्षमाणाइवशकुनिभागिनेयाः सैना पुरः सरनिस्साणनिस्सारितनिः स्वानललितैः क्ष्वेडितैः क्षालितगवाक्षमौनरौक्ष्यंद्रुपदनगरंपुनरपिनिवार्यानिरुच्छ्वासयांचक्रुः ॥ तत्क्षणमेवसत्वरंनिर्गत्वरेषुविविधैरायुधैरशून्येषुद्रुपदसैन्येषु ॥ पद्यं ॥ पृथासुतास्तेपिरथाधिरूढाद्विधाविचार्यैवपुरान्निरीयुः ॥ शरैर्विधातुंद्विषतोपिचूर्णास्तत्सुभ्रुवामप्यलकानचूर्णान् ॥ १०६ ॥ शंखंदध्मुस्ताडयंतिस्मभेरीश्चक्रुः क्ष्वेडांचापनादंविवव्रुः ॥ सिंहावीनांघोसदांलालनीयेयुद्धारंभेतेद्वयेपिप्रवीराः ॥ १०७ ॥ अनयोर्बलयोर्महारथानामवलोकायनभोजुषांसुरीणां ॥ सुदृशां नपुरस्यसौधभाजांवरणस्रग्विधृतैवभेदिकाभूत् ॥ १०८ ॥ आसीदतामाशुधनुर्धराणामासीदताम्यत्करकौशलानां ॥ क्षणंमिथो बाणगणंनिरुध्यव्रणंविनातत्ररणंमहीयः ॥ १०९ ॥ रथिकंरथिकोद्विरदंद्विरदस्तुरगंतुरगः पदगंपदगः ॥ इतरेतरमेत्यरणंविदधौ दिविनारदविस्मयनाकनरं ॥ ११० ॥ रजोंधकारेषुदृशोऽधयत्सु करैः करान्कौतुकसूत्रचिन्हान् ॥ परामृशंतोयुधिपांडुपुत्राः

१ अचूर्णान् चूर्णं सुगंधिद्रव्यं तेनराहितान् मृतभर्तृकानित्यर्थः

रिप्रस्थमधिष्ठिताययुधिष्ठिरायविनिवेद्यस्वपुरेऽपिसुषमामीदृशींपरीक्षितुमिवस्यंदनेनयदुनंदनेनप्रयये ॥ पद्यं ॥ प्राणायमानमहि
लानथपांडुपुत्रान्क्षोणीश्वमानानुजिघृक्षुरपारभूमा ॥ एणाजिनेनघटितोद्गमनीयकृत्योवीणानिनादरासिकोमुनिराविरासीत् ॥ २ ॥
तपोनिधेरागमनेनसद्यः सभाविभोस्तत्रघजनारवाऽपि ॥ वीणारवानुद्रुतभृंगमालाकोलाहलैर्घोषितादिङ्मुखाऽभूत् ॥ ३ ॥
दृष्ट्वानृपोदेवमुनिंविनीतोमौलिस्रजांधूलिभिधूलिवृंदैः ॥ सपंकमाधायतमंघ्रियुग्मेविपंकमात्मानमयंव्यतानीत् ॥ ४ ॥ मेध्यांबृ
सीमधिगतस्यविरंचिसूनोरास्थायसंन्निधिमुदारमुदांकुरूणां ॥ तस्याद्भुतागमनहेतुपरिच्छिदायांचित्तानिदूरपथवर्तनतामवापुः
॥ ५ ॥ निकुंचितेतेनधृतानिजांकेविपंचिकामौनमवाप्यतस्थौ ॥ पांचालिकावंदनवादशैलीमाधुर्यमाकर्ण्यविलज्जितेव ॥ ६ ॥
राज्ञामुनासमुचितेषुसभाजनेषुपात्रैश्चपाणिविधृतैश्चपलैश्चवेत्रैः ॥ निर्वर्तितेषुरभसेननिवर्तितेषुस्मित्वामिथोगिरमभाषतधातृसूनुः

१ सुषमां शोभां २ उद्गमनीयं. धौतवस्त्रयुग्मं ३ विपंकं कर्दमरहितं पापरहितंच ४ बृसी ऋष्यासनं. ५ परिच्छिदायां निर्णये ६ सभाजनेषु नारदस
त्कारेषु पक्षे सभाधिष्ठितजनेषु ७ निर्वर्तितेषु कृतेषु ८ मिथः एकांते.

कोशेमिवराजसुतायाः ॥ ११६ ॥ वृत्तांतमेवमवकर्ण्यसराजवृद्धः क्षत्त्रासकाशमुपनीयसहानुजातैः ॥ धर्मात्मजायधुरिकंसाभि
दोर्धमावादन्ववर्ततामथविभज्यददौस्वनाम्नेः ॥ ११७ ॥ तस्मिन्नाहितलक्षणेनरपतौराज्याभिषिक्तेसतिस्वान्यक्षीणिदधुर्यदंबुशिशि
रलिप्तांगकेकुंकुमैः ॥ रागंयद्विभरांबभूवुरभजन्यद्वाणितेबंदिभिर्निष्पंदत्वमतः स्वदृष्टिरितितंपौराविवव्रुः स्फुटं ॥ ११८ ॥
इत्यनंतभट्टकविकृतौचंपुभारतेद्वितीयस्तबकः ॥ ॥ पितृव्यवाचाऽथपृथातनूजोहरिंपुरोधायसमंबलौघैः ॥ परस्परस्ने
हमिवैषमातुंप्रस्थंययौखांडवशब्दपूर्वं ॥ १ ॥ गद्यं ॥ तत्रवनीभवातिर्वनीपकजनमनीषितपूरकपूरुकुलावनीपसुरसुरभिगोष्ठी
गोष्ठीनेदेशेप्र विश्यस्मरणमात्रनयनपात्रेणसकलशिल्पपारदृश्वना विश्वकर्मणा निर्मापितंकामनीयक विलोकनसुलभ विस्मयभार
गुरुतरानभरान्वोढुमक्षमतयाक्ष्मातलमवलंबमाने विमाने रिवकुरुविंदम णिमंदिरैरभ्रं लिहंजंभ रिपु निदेशेनलंभिततन्नमोपपदंह

१ आर्जकः संपादकः २ क्षत्त्राविदुरेण ३ स्वनाम्नः धृतराष्ट्र इतिनाम्नः ४ आहितलक्षणे गुणप्रख्याते ५ रागं रक्तिमानं प्रीतिंच ६ निष्पंदत्वं स्तब्धत्वं
७ प्रस्थं मानविशेषं ८ वनीपकाः याचकाः ९ गोष्ठी समुदायः १० गोष्ठीनं पूर्वभूतं गोस्थानं.

सं॰ भा॰ पकतीर्थंपरितुष्टास्वष्टामुदिक्षुतदिव्रगुणसंख्याकाम्पक्षान्प्राक्षिपेदिति ॥ पर्व ॥ राजानिदेशकृदभूदितिधातृसूनीरतमुदीनिरवधेरिद ख॰ १

मासविन्हं ॥ यत्तस्यपाणिरकरोन्मृदुकंठगीतेर्वीणागुणेविवशारिखणमंगुलीनां ॥ १५ ॥ तस्मिन्नभः सरणिमुत्पातितेमुनिंद्रेसाते

२७ षुपंचसुसमंववृतेमृगाक्षी ॥ सांक्रंदनेषुविटापिष्विवदानलक्ष्मीर्मानोभवेषुजयसिद्धिरिवाशुगेषु ॥ १६ ॥ इतिनारदसं

वादः ॥ विप्रः कश्चनतत्रजांत्वथभुजावुत्धृत्यचोरैर्हृतागावोमेनिखिलाहतोस्मिविधिनावत्सोपिनोशिष्यते ॥ राजन्रा

ज्यमिदंविमुंचवसुधांशास्मीतिसर्वान्नृपान्किंवाहासयसीतिरोषकटुवाक्द्वारंययौभूपतेः ॥ १७ ॥ दृष्वातंमधुरस्मितोथविजयः

कृत्वासनादुत्थितिंनत्वांघ्रीसमवेक्ष्यभृत्यमिहमांब्रह्मन्सहस्वक्षणं ॥ गावस्तेस्वयमाव्रजेयुरधुनेत्याश्वास्यदस्यून्पुरः प्राविक्षन्मन २८

सातततस्तुनृपतेश्शास्त्रायगेहंस्वयं ॥ १८ ॥ तत्रतेनजगृहेतरस्विनाचक्षुषानृपतिरंगनासखः ॥ पाणिनाचसशरंशरासनंपूर्तयेसप

दिविप्रवासयोः ॥ १९ ॥ विनिर्गतोसौविशिखानिवस्वकान्विमुक्तजीवोन्विरचय्यतस्करान् ॥ नितांतवेगामिवगोपरंपरांनि

१ विप्रवासयोः विशेषेणप्रवासः विप्रवासनाथवयोः २ विमुक्तजीवान् मुक्त प्राणान्मुक्तमौर्वीश्च.

॥ ७ ॥ लाक्षागृहाद्यदच्याविसाक्षादिवरतिः प्रिया ॥ यद्वयवाहिचयुष्माभिस्तद्वयंहिसतांमुदे ॥ ८ ॥ स्वतोभातमतीनांवः कु
तीवाक्यानुशासनं ॥ मौनंतुसुत्हृदाख्येयेदूनंवक्तारमावहेत् ॥ ९ ॥ अष्टमीकिलशिखावधूरियंभातियाजमखवेदिबर्हिषः ॥ यूय
मभसरितावृतान्वयाः पावनः खलुभवत्समागमः ॥ १० ॥ जाययाचपतिभिश्चकदाचिज्जायतेस्मनहिदंपतिशब्दः ॥ अद्भुतस्य
खलुतस्यजगत्यामर्थतामनुभवंतिभवंतः ॥ ११ ॥ एकस्मैस्पृहयालूनामिष्टायसुधियामपि ॥ करस्थमेवब्रुवतेकलहंनिधनावधि
॥ १२ ॥ सुंदोपसुंदौसहजावभीकौसुरेष्विवक्कापिसुरांगनायां ॥ अन्योन्यमाहत्यपुरायमस्यमनोभवेषोरिवलक्ष्यमास्तां ॥ १३ ॥
तत्सौभ्रात्रशरव्यस्यद्वैधीकरणकेलये ॥ भवतांमारचापेषूभवतांमावधूकृते ॥ १४ ॥ गद्यं ॥ इतिरहस्यंतपस्विनिदेशांशुभोदर्कव
र्कयंतस्तेकौंतेयास्तस्यैवसमक्षमासिधारासंगधांसधामिमामाबबंधुः ॥ एतेवयंचातकाइवजीवनमयंवर्षमेकैकमवलंब्यप्रिययासम
मनयासुखेनवत्स्यामस्तथाभूतेष्वस्मासुयोमिथुनकृतोपवेशेदेशेदृशापिप्रविशेत्सोयंवृर्जिनंविहातुमजिनंपरिधायसुकृतसार्थसमर्था

१ दूनं संतप्तं २ एकस्यबह्व्यो जायाभवंति नैकस्यै बहवः सहपतयइति अद्भुतत्वं. ३ अभीकौ भयरहितौ कामुकौच ४ सगंधां सदृशीं ५ वर्षंवृष्टिं संवत्सरंच ६ वृजिनं पापं.

१५

श्लाघाकंपात्प्रियरतेश्शिरसोंतः पथादधः ॥ च्युतोमणिरिवेरावान्सुषुवेतनयस्तया ॥ २७ ॥ इत्यौकिकांसरजनीमपनीयतत्रश्वा
सैस्समंस्वकुलसंभवपृष्ठमित्रैः[1] ॥ मुक्तस्तयातटगतोनुचरान्द्विजातीनंतर्वतो[2]द्भुतरसैरतनोत्स्ववृत्या ॥ २८ ॥ उलूपिकायारतिदं
शनैस्तैरुन्मस्तकंमोहमिवाषनेतुं ॥ उदग्रवीर्योपाधिजन्मभूमिमुमागरुंशैलमयंप्रपेदे ॥ २९ ॥ भालस्यपंचविशिखेपदयोः कृतां
तेहासस्यदानवपुरेष्ववलोकनस्य ॥ शांबायुधे[3]पशुपतेरपदान[4]पद्यंगायंतिसिद्धमिथुनान्यशृणोत्सतस्मिन् ॥ ३० ॥ गद्यं ॥ तत्रतत्र
सतस्यहिमाचलस्यखुरपुटविनिमयविन्यासचंद्रकितैरवतारपथैरपिरोमंथफेनशकलतारकितैःप्रतीरनमेरु[5]तलोपवेशैरप्यनुमेयहर
वृषभस्वैरविहारासुकटकसरसीषुवृजिनानिविशोध्यवनमदावलकलभविदलितसरलद्रुमप्रवालपरिमलसुरभिलेनोपत्यकावर्त्म
नादिविभुविभरणकुशलाभ्यांमहेंद्राभ्यां[6]परिगृहीतांहरितमवजगाहे ॥ पद्यं ॥ पंफुल्यमाननवकेतकपांसुगर्भैः पर्यंतनिर्झरजलैः

२५

१ स्वकुलसंभव पृष्ठमित्रैः स्वकुलं उलूपिका कुलंतत्संभवाः नागाः तेषांपृष्ठानि दोर्षाणोतिप्रसिद्धिः तेषांमित्रैः सदृशैः दीर्घैरित्यर्थः २ अंतर्वतः गर्भवतः
स्थूलोदरानित्यर्थः ३ शांबायुधेइंद्रे ४ अपदानं वृत्तकर्म. ५ नमेरु वृक्षविशेषः ६ महेंद्राभ्यांइंद्रेण महेंद्राख्य कुलाचलेनच.

वर्त्तयामासशुचंद्विजन्मनः ॥ २० ॥ प्रयाणनम्रेतदनुस्वमौलौपार्थस्यजज्ञेनियमाभिषेकः ॥ प्रागेवतीर्थोपगमात्पवित्रैर्बाष्पैर्नरेंद्र
स्यवियोगभीरोः ॥ २१ ॥ गद्यं ॥ सर्धारर्धारित्युच्छ्रितेनकृच्छ्रेणराज्ञागृहीताभ्यनुज्ञोवल्कलंघनंकल्कलंघनायपरिधायमलयानिलइ
वमनुष्यधर्मणाराजन्वतींकाष्ठांप्रतिष्ठमानस्तपःप्रसादितस्यभगवतोभवानीवल्लभस्यसाक्षात्कृपामिवभगीरथरथानुसारणींतरंगि
णीमुपगम्यतत्रपवित्रासुवीचिषुसायंतननियमायऋचोघमर्षणीर्जपन्मज्जनमकार्षीत् ॥ पद्यं ॥ नालीकात्कुवलयसंक्रमेस्खलि
त्वामग्नाधः पयसिरमेवतत्रकाचित् ॥ तंदृष्ट्वाभुजगसुतामिथोरिरंसुः संतुष्टात्हृदयमिवानयत्स्वगेहं ॥ २२ ॥ प्रत्यूष्यत्हृदितत्रै
षामनुष्यंफणिनारंतैः ॥ संतर्पयितुमुत्सेहेकंदर्पसममर्जुनं ॥ २३ ॥ भोगायतस्याभुजगेंद्रपुत्र्याः फूत्कारएवस्फुटसीत्क्रियासीत् ॥
कस्तूरिकांकोजनिकंठनैल्यंफणामणिः पल्लवशेखरोभूत् ॥ २४ ॥ पाण्योर्ज्यामर्शकाठिन्यंतस्यतत्कुचमर्दने ॥ तस्याश्चतन्मुखा
स्वादेफलायाभूत्द्विजिन्हता ॥ २५ ॥ मुखाच्चक्षुश्रवस्तन्व्यास्सुरतेमीलनंदृशोः ॥ चक्रेमणितवैदग्ध्यंतस्यकाननकौमुदी ॥ २६ ॥

१ कल्कंपापं २ मनुष्य धर्मणा कुबेरेण ३ नालीकात् कमलात् ४ चक्षुश्रवस्तन्व्याः नागकन्यायाः ५ मणितं रतिकूजितं ६ काननकौमुदी अरण्यचंद्रिका व्यर्थामित्यर्थः

उद्यानभूमिमुपगम्यतयासपार्थस्सुख्यान्पितुः पदममन्यतबल्वजेभ्यः ॥ ३८ ॥ दिवसेसुभंयुगुणकोरकितेदयितंत्हृदिस्थितामिवा
र्त्तिमती ॥ अवतार्यसाभुविकुमारमभादथबभ्रुवाहनइतिप्राथितं ॥ ३९ ॥ गद्यं ॥ इतितत्रदिनानिकानिचिदुपित्वाप्रयामीतिभा
षितस्यपक्ष्मावलंबिवाष्पमेवोत्तरयंतींप्रेयसींरहासिदृढालिंगनतरंगितवल्कलोत्तरीयमर्मरमहाध्यायिसीत्कारंपुलकझर्झरैकपोलेप
रिचुंब्यतस्याः कथंचिदुदंचितानुमतिर्निर्गत्यरक्षोयोधिभिरिक्ष्वाकुपतिसेनाध्यक्षैरुत्पाटितानांमलयदर्दुरमहेंद्रपादानांमूलशिला
तलपरिदृश्यमानकठिनतरतत्करांगुलिनखरेखाव्यावर्त्तितकुलिशभयोन्मीलितशैलसंस्थानबुद्धिभिस्सन्निवेशावटैः स्थपुटितामट
वींविलंघ्यपुत्रीन्यक्काररुषापुलस्त्यान्वयस्यपुरीमुन्मूलयितुंप्रसारितेनभुवोभुजेनेवमेतुनाकृतसीमंतमुदन्वंतमभजत ॥ प॰ ॥
समीक्ष्यसेतुंरघुवीरनिर्मितंसाचित्रभित्तिकृतधीर्धनंजयः ॥ दिनेशवंशस्यतपोविचारणेचिरावकाशंवितताचेतसे ॥ ४० ॥ अब्धौ
वानरपातिताचलशिलाभंगाभिघातैश्चिरादक्षणांधैः कुणिभिः करेणचपदाखंजैः पयोमानुषैः ॥ वीचीवीथिपुकार्त्यमानमनघंवृत्तंरघू

कलितामिषेकः ॥ पार्थस्सतत्रजनकाभिधयेवत्दृष्टः पादेचिरंपरिचचारगिरिंमहेंद्रं ॥ ३१ ॥ निजनगरनिरीतोवासविर्दिक्षुसर्वा
स्वपिपरिणयहेतौकाम्यियात्रामुहूर्ते ॥ जनकपरिगृहीतासादिगित्येवतस्यांकथमपिनसजातांकन्यकांपर्यणैषीत् ॥ ३२ ॥ जलधि
तटपदव्याझर्झरैश्चीरशब्दैरवमयमनुकुर्वन्राजतालीवनानां ॥ रतिपतिरथकारेणाद्रिणालांछितायांदिशिविविधतटिन्यांदत्तचक्षुः
प्रतस्थे ॥ ३३ ॥ शैलोगर्भेशिशुरिवभुवः शासनाद्यस्यशेतेवातापियोजठरदहनेवृत्तयामासहव्यं ॥ क्षोणीनम्रंकरणमहिमाकोप
लेशोयदीयस्तस्यावासंदिशमभिययौतापसस्येंद्रसूनुः ॥ ३४ ॥ धृत्वाफलेपुसलिलानिकवेरजायाः साम्यंपरीक्षितुमिवाभ्रसरिद्गु
णौघैः ॥ अभ्रंलिहैर्निबिडितांतटनारिकेलैरालोक्यचोलवसुधामयमभ्यनंदत् ॥ ३५ ॥ वाराशिवासजडमात्मवपुर्विशोषमानेतु
मातपभरात्तटमुत्तरेण ॥ लंकामिवागतवतींनिजपौरवर्जंपार्थोविवेशनगरीमथपांड्यगुप्तां ॥ ३६ ॥ तत्रचित्रांगदातेनव्यूढाराज
कुमारिका ॥ दर्शनेदौर्हृदार्तौचद्वयोरासीदनंगदा ॥ ३७ ॥ एलालवंगतरुपिप्पलिकापटीरतांबूलिकाक्रमुकदंपतिभावरम्यां ॥

१ पादेप्रत्यंतपर्वतेचरणेच २रतिपति रथकारेण रतिपतिः कामः तस्यरथः सुगंधवायुः तस्य उत्पादकेन ३दौर्हृदार्तौ गर्भपीडायां ४अनंगदा कामदात्रीअंगदरहिताच.

चीकलयामासकरस्थिताविव ॥ ४८ ॥ तदानींखलु ॥ चकांगमिदपश्यतोहरचलच्छंपासमुन्मेषणैः पुष्यत्केतकगंधासिंधुविलुठत्पुष्पंधयांधीकृतैः ॥ मेदस्वीद्धतकोकिनीकलरवैर्मेघंकराशामुखैः पांथानामपमृत्युभिः कतिपयैः प्रादुर्बभूवेदिनैः ॥ ४९ ॥ कालांबुदालिनलिकाक्षणदीप्तिवर्त्यासंधुक्षितात्मपदिसध्वानिनिसराद्भिः ॥ वर्षाश्मसमिगुलिकानिकरैः कठोरैर्धर्मोभियातिमवधीद्घनकालयोधः ॥ ५० ॥ माद्यद्भीलिहावर्हरुचेमलिनीकृताग्राकांतारसीम्निनवकेतकवर्हरेखा ॥ दग्ध्वांचलेस्मरभियादायिताजनेनसंप्रेषितापथिकभर्तृपुरात्रिकेव ॥ ५१ ॥ अर्जुनेपुस्तकलेपुविकासिष्वाद्रिसीम्निधृततादृशशब्दः ॥ एकएवविशुशोपविशोषादेतदंबुभृदनेहसिचित्रं ॥ ५२ ॥ वियत्यशेषामुनिर्दिक्षुदिक्षुवियोगशिल्पींद्रविनिर्मितायाः ॥ तस्यामृगाक्ष्याश्वतडित्ततेश्चधनंजयस्संविविदेनभेदं ॥ ५३ ॥ मन्मथेज्वलतिवासवसूनुर्मानसेपारिणयेयदुपुत्र्याः ॥ लाजवापमिवकर्तुमुपेद्रंतत्सगर्भ्यमथचित्त

१ पश्यतोहरः पश्यतः पुरुषस्य हरतीति भामह इतिप्रसिद्धं २ पुष्पंधयाः भ्रमराः ३ क्षणदीप्तिः विद्युत् ४ अभियातिशत्रु ५ बर्हंपत्रं ६ अर्जुनेषु वृक्षविशेषेषु ७ अंबुभृदनेहसि अंबुभृतां मेघानां अनेहा कालः तस्मिन् .

णांप्रभोः श्लाघंश्लाघमसौतटेनहरितंप्राचेतसीमभ्यगात् ॥ ४१ ॥ गोकर्णमेत्यसकुलाद्रिसुताप्रियस्यपुष्पाणिमूर्ध्निनिदधेपुरुहूतसूनुः ॥ आगामिर्नानिजभुरासनताडनानामत्रावकाशइतिसूचयतेवदोष्णा ॥ ४२ ॥ पापापनोदेफालितेऽर्जुनस्यप्रागेवसेतोरवलोकनेन ॥ प्रभासतीर्थेनियमावगाहः पश्चात्सुभद्रागमहेतुरासीत् ॥ ४३ ॥ पाठांतरं ॥ पापापनुत्यैपरिकल्पितोयः प्रभासतीर्थेप्रथितेभिषेकः ॥ सेतुंदृगास्पृष्टवतोस्यसोसौसाध्यंविनाजागरिताबभूव ॥ ४४ ॥ गोपृष्ठलग्नंकुलशैलकन्यासहायमंतः सततंदधानः ॥ आश्चर्यमैक्षिष्टतमेवदेवंगोकर्णवासंकुरुराजसूनुः ॥ ४५ ॥ ततोघनाविर्भवनाद्भियेवतत्रामलंमानसमस्यभेजे ॥ कर्णांतरक्रौंचेपथेनशोभायशोमरालोयदुकन्यकायाः ॥ ४६ ॥ स्मृतिपथस्थितयापिसुभद्रयाजनसमक्षमिवासितुमात्तभीः ॥ द्विजकुलानिसतत्रसमत्यजत्सहचराणिरतीशवशंवदः ॥ ४७ ॥ पयसापरिपूरितौघटौपरिपश्यन्पथिपाकशासनिः ॥ कमलाक्षकनीयसीकु

१ सुभद्रागमः सुभद्रस्यआगमः प्राप्तिः पक्षेसुभद्रायाः २ गोकर्णवासं गोः कर्णः तस्मिन्वासोयस्य पक्षे गोकर्णं तत्संज्ञंक्षेत्रंतस्मिन्वासोयस्य. ३ अमलं निर्मलं पापरहितंच ४ मानसं चित्तं मानससरश्च ५ क्रौंचः क्रौंचपर्वतः ६ मरालोहंसः

मारिकाणाकृतेपृथक्पृथगीरितांत्रिशरकांडीमिवत्रिदंडीं बिभ्राणंनिजपल्लवकोमलिम निर्जयशोका दिवशुष्केणप टीरतरुणापादुकाभूयपरिचर्यमाणपादयुगंतंभावना[1]भिक्षुंसंभ्रमेण[2]वंदमानेपुयदुवृंदेषुमुकुंदोपिसविनयमुपागतश्चेतः पूरणावशेषैः स्वसोदरीप्रेमरसैरिवतीर्थजलैः पूरितंपिचंडिलंकमंडलुंनदीयपाणेरादायभगवान्नितइतइतिराजभवनमुपनीयकन्यांतः पुरेनिवेशयामास ॥ पद्यं ॥ मार्गेशरत्रयममुष्यकृतेविमुच्यशेषंद्वयंपुनरिवोज्झितुमात्तलोभः ॥ शुश्रूपितुंतदनुसोदरचोदितायास्तन्व्यास्स्मरोनयनमेवशरंव्यतानीत् ॥ ६० ॥ वपुषामधुरेणसुभ्रुवाधनुषाचित्तभुवाचतर्जितः ॥ तपसेवदिनेदिनेतनोस्तनिमानंजगृहेसमस्करी ॥ ६१ ॥ प्रतिनिश्वसितेदीर्घेपाणिनानासिकांस्पृशन् ॥ भावयामासपार्थोयंप्राणायाम[3]समापनं ॥ ६२ ॥ प्रणवोच्चरणेपुरः प्रसर्पत्प्रवभासेयतिनस्तदाधरोष्ठं ॥ मुहुरग्रगतावनींद्रपुत्रीमुखमास्वदयितुंकिलोज्जिहानं ॥ ६३ ॥ कन्याकरेमृद्गातिपादपद्मंपुष्पंतिगात्रेपुलकांकुराणि ॥ हरेहरेमाधवमाधवेतिहरिस्मृतेरन्यथयांचकार ॥ ६४ ॥ गद्यं ॥ एकदानिर्वर्त्यप्रत्यवसान[4]कृत्यंप्रतिक्षणमिक्षुचापक्षुरप्रसंतक्ष



१ भावना कपट २ संभ्रमेण त्वरया ३ प्राणायामं प्राणस्य दैर्घ्यंप्रायामंच ४ प्रत्यवसानं भोजनं.

मनैषीत् ॥ ५४ ॥ अणुमात्रमिदंसहेतवोढुंनहिविश्वंभरमद्यमामितीव ॥ मनमोप्यवरुत्यतस्यदृष्टेः पुरतः प्रादुरभूत्पुमान्पुराणः ॥ ५५ ॥ स्वस्वचेष्टाकथेनद्याद्वितीयर्तुगुणज्ञया[1] ॥ नबभूवेतयोस्तत्रनयनानंदिनोर्मिथः ॥ ५६ ॥ विजयोमधुरास्मितस्यभावांविदुषस्तस्यमतेनभिक्षुवेषः ॥ कुसुमास्त्रभयादिवातिगूढः कुहरेरैवतकस्यतिष्ठतिस्म ॥ ५७ ॥ कथंसुभद्राकमनीयतायाः कल्पेतनुत्यैकविरुन्नतोपि ॥ चतुर्थमप्याश्रमम[2]स्ययेनतांसाधनीभूयदिदृक्षतेस्म ॥ ५८ ॥ मदात्वएवाद्रितटात्पातिः श्रियः परिप्लवंतंप्रकृतेशुभागमे ॥ यदाशयेते[3]शायएवतद्भवेदितिब्रुवन्द्वारवतींपुनर्ययौ ॥ ५९ ॥ ग० ॥ तदनंतरमहस्करमहतस्करमहामहान्मस्करी[4] रैवतकागिरिरुपस्कुरुतेतस्यनमस्करणमस्माकंश्रेयस्करणमितिपुरोधोजनबोधनात्कुतूहालिनाहालिनानगरमानीयमानंबहिरपिज्वलता विरहानलज्वालेनेवकाषायवाससाऽवगुंठितवपुषंसव्यसा[5]चिशब्दमत्सरेणस्मरवीरेणप्रवासरंध्रमन्विष्यपन्नगपांडययदुकु

१ द्वितीयर्तुगुणज्ञया द्वितीयर्तुः ग्रीष्मः तस्यगुणः शोषः तद्ज्ञया शुष्कयेत्यर्थः २ अपिशब्दः त्यक्तदारेषणस्यापि नपुंसकस्यापिच तद्दर्शनेच्छेति सौंदर्यातिशयद्योतनार्थः ३ शयेहस्ते ४ मस्करीयातिः ५ सव्यसाची सव्येनापिहस्तेन धनुः साचीकर्तुंसमर्थः

भिहितयोर्विजयनरशब्दयोर्धर्मिपरताविशेषनामपरताचतवकृपयाभवेदितितस्मैव्रीडतरलनयनंवदनमवनमयंतीतस्थे ॥ पद्यं ॥ यमेवमुद्दिश्यतवोक्ति[1]भंगीसएषदासोरम्यनुकंपनीयः ॥ इतिप्रकाश्यक्षणमर्जुनत्वंचुचुंबतांचोरयनिः कपोले ॥ ७० ॥ स्वेदांबुपूरभरितेसुदृशस्तदास्याः क्षेत्रे[2]स्वांकिंशुकशिलीमुखमीरकृष्टे ॥ पुष्पास्त्रकर्षकवरः पुलकच्छलेनशृंगारबीजनिकरान्निबिडानवाप्सीत् ॥ ७१ ॥ तस्यामेववधूमिमांमरजनौसद्योनुकूलांरहः पाणीकृत्यविलोकितोत्सवभरोद्वाभ्यां[3]हरिभ्यामपि ॥ पौरेपूभयथाजनेष्वब[4]लतांप्राप्तेषुपार्थस्तयाजाग्रत्साराथिविद्ययामहरथारूढः पुरान्निर्ययौ ॥ ७२ ॥ आकर्ण्यदंजृंभि[5]तानांयदूनांपार्थोद्देशाक्रोधनत्वस्य[6]जातेः ॥ म्लानिंदातुंमाधवो[7]माधवोभूद्यत्रायत्ताकौ[8]रवीमासमृद्धिः ॥ ७३ ॥ रणोत्साहेशांतेयदुजडिमकीर्तिध्वजलतांमुहुस्स्मारंस्मारंकपटयतितांवल्गितकुचं ॥ हसंत्याः प्रेयस्यादृशानरुचिमित्रीकृतयशा[9]शांतांगेनाविक्षत्सुरपतितनूजोनिजपुरीं ॥ ७४ ॥

१ भंगीरीतिः २ क्षेत्र शरीरेकेदारेच. ३ हरिभ्या इंद्रोपेंद्राभ्यां ४ अवलतां निर्वलतां वल्गामगहिततां ५ जृंभितानांवद्धपरिकराणां ६ जातेः जातिवल्याः ७ माधवः वसंतः ८ कौरवी कुरुसंबंधिनी कुरवकसंबंधिनी. ९ शतांगेन रथेन

णेनसमंतात्पतितैः सत्वगुणशकलैरिवश्वेतबिंदुभिर्व्याकीर्णांचामूरवींत्वचमध्यास्यविश्राम्यंतं*धवित्रेणवीजयंतीसुभद्रातैस्तैरिंगि
तैर्यतित्वेसंशय्यैतंस्यतत्वजिज्ञासयामविनयमनुरहसिव्यजिज्ञपत् ॥ पद्यं ॥ तपस्विन्नद्यमेप्रीतिस्तवाभ्यागमसंभवा ॥ कन्[1]या
मौनावकीर्णित्वेकल्पशाखाशिखायते ॥ ६५ ॥ इदानीममी ॥ यदवः खलुपुण्यराशयोयतिनामिंद्रतवांघ्रिसंगमे ॥ शिरमायदवा
प्यतेरे[2]जोमनसाऽन्यत्परिवर्ज्यतेचयैः ॥ ६६ ॥ भगवन्नखिलंविबुध्यसेपरमा[3]र्थवदभाविमेशुभं ॥ प्रयतायनयोभवद्विधाः प्रणि[4]धाने
नहिदिव्यचक्षुषः ॥ ६७ ॥ अवकर्ण्यतदेषमीलितः क्षणमक्ष्णोः प्रतिवाचमाददे ॥ बहुनाकिमयिस्वकैर्गुणैर्विजयं[5]प्राप्स्यसियोषि
तांकुले ॥ ६८ ॥ पादांगुष्ठनखंयस्तेफालेकुर्याद्विशेषकं[6] ॥ सनरो[7]पिस्मरेणार्त्तः मृग्यस्स्यादामिषंदृशोः ॥ ६९ ॥ गद्यं ॥ इतिसात
स्यवक्रिमस्पृशावचसाश्रवसाचनिपीतपूर्वैस्तैस्तैर्लक्षणैश्चमोयंसंक्रंदननंदनइति निश्चयमणिंत्हृदयपेटकपुटे निधायभगवन्भवद

* मृगचर्म व्यजनं. १ कन्यामोनावकीर्णित्वे कन्योचितंमौनं तस्यअवकीर्णित्वे क्षतौ २ रजः धूलिः पापंच ३ परमार्थं यथार्थं. ४ प्रणिधानेन योगेन
५ विजयं जयमर्जुनंच ६ विशेषकं तिलक ७ नरोपि मनुष्योपि अपिशब्दः पूर्वश्लोकार्थ समुच्चायकः पक्षे नरावतारोपि.

कलयेयुरतीवचित्र[1]भावंक्षणपीता[2]निदृशाकथंनतानि ॥ ८० ॥ सीमंतविद्युदवतंसशिरीषचापंकैश्यंघनोयमिनिकैः सुदृशांनजज्ञे ॥ तस्याधएवनिटिलेसततंयदासीत्तत्तादृशंसलिलशीकरदुर्दिनश्रीः ॥ ८१ ॥ उग्रैः करैरुष्णरुचेः समंताद्रूष्मायमाणाखिलदिङ्मुखस्य ॥ आगंतुमन्हः संविधंस्वकालेप्यनीश्वरेवापसं[3]सर्पराात्रिः ॥ ८२ ॥ वर्षास्वियंत्वाग्निमस्मदुपांतभूमेरुन्मूलनंकलयतीतिरुषावलीढैः ॥ तीरद्रुमैः स्वनिकटादपसारितेवमध्यंजगामसरितांसलिलस्यवे[4]णी ॥ ८३ ॥ देशेदेशेजाडिमकुरंगास्तेजोभल्लैर्दिनकराभिल्ले ॥ धावंधावंप्रहरतिराज्ञांधारा[5]गेहंशरणमवापुः ॥ ८४ ॥ अंगांगसंगासहनेतपर्त्तावन्योन्यमेवाभिमुखंयुवानः ॥ वाचापिकेचिन्मनसापिकेचित्दृशापिकेचिद्दृढमालिलिंगुः ॥ ८५ ॥ गद्यं ॥ एवंपचेलिमांहेलि[6]मयूखकेलितस्यतनयायैनिवेदायितुकामाभिरिवरामाभिर्निरंतरोपांतौदृग[7]ध्वनिवमंतौवसंतरतिकांताविवजयंतजनकानंतरजकौंतेयौपारिपाटलहं[8]सपाददुरवगाहवने[9]जातसना



१ चित्रभावं आलेख्यत्वं आश्चर्यंच २ पीतानि प्राशितानि पीतवर्णानिच. ३ ग्रीष्मर्तौ दिवसानांदैर्घ्यमिति उत्प्रेक्षयाद्योत्यते ४ वेणीप्रवाहः ५ धारागेहं जलमंदिरं ६ हेलिः सूर्यः ७ दृगध्वनिवसंतौ मूर्तिमंतौ ८ हंसपादाः हंसानापक्षिविशेषणां पादाः पक्षे हंसस्य सूर्यस्य पादाः किरणाः ९ वनजातं कमलं अरण्यसमूहंच

ततोमुहूर्त्तेसकलेऽभिनंद्येकुरूद्वहानांकुशलोदयाय ॥ सुतंसुभद्रासुषुवेऽभिमन्युंप्रवीरसूस्तानामिवप्रवीरं ॥ ७५ ॥ पांचालपुत्रीचप
तिव्रतानांप्रधानभावेकृतपट्टबंधा ॥ पंचापिसद्यः प्रतिभू[1]रिवस्वान्पतीन्पितॄणामनृणानकार्षीत् ॥ ७६ ॥ ग० ॥ अथतेषांनादृशंपु
त्रोत्सवमाकर्ण्यऋतुर्वसंतः सामंतराजसंबंधितयाहर्षादिवसमाजगाम ॥ तदानीभगवान्पवमानस्तुभीमस्यसुतोत्पत्तिनिमित्ताशौ
चवत्तयालोकस्पर्शायसंकुचन्निवकतिचनदिनानिमलयंविहायपदमेकमपिनचचाल ॥ पद्यं ॥ एतेनखल्वकरुणेनतपागमेनजी
वातुरद्यममदेशतएवदूरात् ॥ उत्सारितोमधुरितिविरुषावनांतेतत्स्वागतंपरभृतोनसमाचचार ॥ ७७ ॥ शिरीषपंक्तेः कुरुकामि
नीनांशरीरवल्लयासहमार्दवेन ॥ उपस्थिताभूदुपमातदानींतपस्थितानां[2]सुलभाहिसर्वं ॥ ७८ ॥ कुरुकेलिवनेषुमल्लिकाकुसुमेषुभ्र
मरावलिर्बभौ ॥ ऋतुनामधुगंधगुप्तयेजतुनाग्रेनिहितेवमुद्रणा ॥ ७९ ॥ शुभसौरभसंभृतानिभूमौशुचि[3]भूतान्यपियानिपाटलानि[4] ॥

१ प्रतिभूः जामीनइतिप्रसिद्धं. २ .तपस्थितानां तपेग्रीष्मेस्थितानां पक्षे तपआचरतां ३ शुचिभूतानि धवलानि ग्रीष्मर्तूत्पन्नानिच ४ पाटलानि रक्तानिपुष्पविशेषाणिच.

पुत्री ॥ तापंपितुः स्वमहरत्तरलोर्मिहस्तैरन्यंनयातिहिविभूनिरपत्यभाजा ॥ ९० ॥ सुरनायकानुजमनोवशीकृतौसुदृशोमुखैर्निपुणतांयथाययुः ॥ सरसीरुहैर्ननलिनीलनास्तथासकचान्यमूनिविकचानितानियन् ॥ ९१ ॥ यमः स्वसुः सन्निधिमेत्यरात्रौस्वकांतिचोरंसुदृशामुरोजः ॥ नालाग्रशूलेनलिनंनिवेश्यववल्गहर्षादिववारिमध्ये ॥ ९२ ॥ व्यात्युक्षिकायांविपुलेक्षणासुवर्षन्नखद्योतवलक्षमंभः ॥ सखीमुदारांमरितस्तुतस्याः करोप्यसावीदिवकंमहंतुः ॥ ९३ ॥ उल्लासभाजाहरिणाप्रियायाः कल्हारमाल्येकलितेकवर्या ॥ असैरमूयाहसितैश्चाचित्रमुत्तंमितंवक्त्रमभूत्समपत्न्याः ॥ ९४ ॥ ग्लहंनिमग्नग्रहणेपुकल्पयन्स्वयंग्रहाश्लेषसुखंयदूद्वहः ॥ सवर्णवर्ष्मासलिलेताडितनूः मुखादगृण्हात्सुदृशस्तुताननं ॥ ९५ ॥ फूत्कृतैः क्वाचिदधः स्थितानिचिन्हंबुद्बुदंहरिरुदस्यानिमग्नः ॥ वंचयन्प्रतिवधूः क्वचिदूरुस्तंभमंबुपुचुचुंववरांग्याः ॥ ९६ ॥ क्रीडनीमंडलीभूयकृष्णयोरप्सुयौवने ॥ नाटिन्यास्तटयोः

१ स्वंद्रव्यं २ विकचानि केशरहितानि प्रफुल्लानिच ३ व्यात्युक्षिकायांजलक्रीडायां ४ उत्तं सितं भूषितं पक्षे उत्तं आर्द्रं सितं शुभ्रं ५ ग्लहं पणं ६ सवर्ण वर्ष्मा तुल्यशरीरः

थेपाथसिरोधसिचविहारैस्तेषांदिनानामौपयिकमातिथ्यमापादयितुंभगवतीनामेवसरितमापननां ॥ पद्यं ॥ कल्लोलवेगकपटेन कलिंदपुत्र्याप्रादंप्रतिप्रससृपेपरमस्यपुंसः ॥ तिष्ठंतिमेपुनरहत्रिजगत्पवित्राः सख्यः कतीतिसमवीक्षितुकामयेव ॥ ८६ ॥ तस्याजलेषुतरुणांबुदजातिवैरिष्वावर्त्तजालमनयोरुभयोरतानीत् ॥ वीचीकराग्रविनिवारितरामसीरव्यावल्गनोपजनितव्रणगर्त्तशंकां ॥ ८७ ॥ मुरारिनारीमुखपद्मपंक्तिर्जवेनयोद्धुंजलदुर्गपद्मैः ॥ तीरेवितस्थेनिलकापदेशात्कृत्वापुरः खेटकमंडलानि ॥ ८८ ॥ तासांविलासगमनंसमवेक्ष्यतत्रलाल्यत्वहेतुरपिलज्जितचेतनायाः ॥ वेगात्तिरोभवनविघ्नतयामराल्यागर्ह्याबभूवनिनरांगतिमांदिमश्रीः ॥ ८९ ॥ ग० ॥ शनैः शनैस्तामुसरितमवगाहमानासुकासांचिदीर्ष्ययेवनितंबबिंबानिनिजावकाशदानावलंबितोन्नातिभिरंबुभिः पुलिनानिनिचोलयांचक्रुः ॥ अपरासाममूययेवनाभिकुहराणिजलचूषणादावर्त्तकुलजवावलेपमवलुंपन् ॥ इतरासांक्रुधेव कुचयुगलानिक्षोभणात्कोकनदकोशान्विदलयामासुः ॥ पद्यं ॥ वक्षोजकुंभनिवहाद्वनिताजनानांग्रीष्मर्तुनाविनिहितंग्रहराज

१ तरुणां बुदजातवेरिषु सजलमेघसमूहसदृशेषु श्यामेष्वित्यर्थः २ व्यावल्गनंप्रहारः ३ खेटकः ढालइतिप्रसिद्धं ४ निचोलयांचक्रुः आच्छादयामासुः

मघर्मतोयैरष्टाभिरंगैरवनीरजांसि ॥ १०० ॥ परस्परासंगफलप्रदित्सयास्वजन्मतारैदिववासरावव ॥ उपस्थितौनावुपसृत्यसं
भ्रमात्तदाशिषोनंतरमेवमब्रवीत् ॥ १०१ ॥ क्षुत्प्रपीडयतिमामयिवीरौकुक्षिमेत्यचकितेवयुवाभ्यां ॥ याचतेतदशनंबहुभोक्तुंयस्य
तृप्यतिपुरातिथिरेषः ॥ १०२ ॥ इत्थंस्वदक्षिणकरंपुरतः प्रसार्यतस्यांर्दितोवचनपाण्यर्यनुधाविवेगा ॥ तभ्यांतथेतिभणितिस्तुस
मालंबेसत्स्वर्थनाफलमदौर्हृदमेवमूते ॥ १०३ ॥ गद्यं ॥ अथमुदाकथितात्मयथातथभावोभगवान्बृहद्भानुर्दंतपटीजवनिकांतर्नटी
भवत्स्मतयोर्देवकीपृथासुनयोर्धुरिगिरिदरीवमतिधुरीणविभावरीचरसरीसृपदिविषदराशिमेदुरीकृतदुरीहिततांडवस्यजगत्कंठे
गैडुत्वंतत्परिरक्षणदक्षस्यऋभुक्षणस्तक्षकेपक्षपातंचविनिवेद्ययुवयोः कटाक्षवलेनंक्षणाद्दिधक्षामीतिस्वयमपेक्षितविशेषमाचचक्षे
॥ पद्यं ॥ भ्रूसंज्ञयायदुपतेः पुरुहूतसूनुः संतुष्यतोऽथजगृहेसननूनपातः ॥ तूणीचगांडिवसरवौतुरगांश्वशुभ्रान्कांतंरथंचनटताक

१ परस्परासंग फलप्रादित्सया परस्परस्य आसंगः योगः तस्यफलंअन्नं तद्दानेच्छया २ यस्यपेन तृप्यतेर्योगात्षष्ठी ३ अर्दनः याचनाकुर्वतः ४ अदौ
र्हृदं दोहदलक्षणरहितं ५ गडुत्वंरोगविशेषः

प्रांतेताटंकेइवरेजतुः ॥ ९७ ॥ गद्यं ॥ इतिचिरंवित्द्वत्यप्रतीरमुत्तीर्णाभिर्जलमेलन[1]व्रीडादिवसंकुचितात्मभिः कुचैरानमिताभिस्तदंगसंगमशर्माणिमर्मरगिरासंस्तुत्यपवनचंचलैरंचलैः श्लाघमानानिववमनानिवमितवनीभिः कायकांतिकनकलताकोरकाणीवकनकाभरणानिकामनीयकपुनरुक्तिमात्रस्यपात्रयंतीभिर्वधूटीभिः महनटाटवींपर्यटनोस्तयोरग्रेदिशिदिशिक्रशिताशिशिरेतराभीशु[2]प्रकाशोजनदृशांकोशीकारदेशिकः कोपिमहमांराशिराविरासीत् ॥ पद्यं ॥ उन्मिष्योन्मिष्ययत्नात्परिचालितयथापूर्वशात्तयाथदृष्ट्यातन्मध्येवीक्ष्यकंचित्पुरुषमनुदित[3]छायहस्तानपत्रं ॥ अक्ष्णाज्ञानेयैर्मोनोर्विदधतमनयोः प्रश्रयाश्चर्यदत्तद्वैराज्यादाकुलाभूद्यदुकुरुवरयोस्तत्क्षणंचित्तसीमा ॥ ९८ ॥ मुखेनिरोवेपथुभिर्वयः कृतैर्मुकुंदवध्वः कृतमूचनाइव ॥ द्विजातिवृद्धस्यपथोस्यपार्श्वयोर्द्विधापमस्तुः स्हमातिर्भीरवः ॥ ९९ ॥ ताभ्यांननस्तस्यपदोः पुरस्तादपंकमात्मानमहोविधातुं ॥ स्पृष्ट्रान्युदंचद्ध

१ जलमेलनं जलसंगमः मूर्खसमागमश्च २ अभीशुः किरणः ३ उपरिसूर्यः अधः अग्निः अतः सत्यपिछत्रे छायाभावः ४ ज्ञातेयं बंधुत्वं ५ ओतोः मार्जारस्य.

जायमानैः स्फुलिंगैर्हरिचंदनादिषुकेषुचिद्रूल्कायमानैरालोकैर्नीडवत्सुकेषुचित्परस्परपक्षिपक्षताडनरटनायमानैः प्लोषचटचट
त्कारैश्चसर्वतः परीतमर्पितद्वनंमुहूर्तंयथापुरमवनस्थे ॥ पद्यं ॥ हुताशनपरित्रासादुच्चलंत्यावनश्रियः ॥ कबरीविश्लथावेगा
त्कापिधूम्याखमानशे ॥ ११२ ॥ वलयंधूमरेखायावर्त्मनिद्युसदांबभौ ॥ भाविनः शरकूटस्यपरितोमानसूत्रवत् ॥ ११३ ॥
अस्यैवगांडिवभृतोभुविहेजनत्वंमल्लंतृणायमहतामपिमन्यमानः॥ बाव्होर्बलंपठपठेतिवदन्निवाग्निः स्फोटारवंसझटितिस्फुटयां
बभूव ॥ ११४ ॥ स्वपार्श्वयुग्मज्वलदाग्निकंदलावनांतभाजोजगरामहत्तराः ॥ निशातवज्रक्षतिनिस्सृतासृजांदशामयत्नाज्जगृ
हुर्महीभृतां ॥ ११५ ॥ गद्यं ॥ तत्रनिकुरंबाणिस्तंबेरमाणामामूलमनलार्चिरवलंबितदंतमुसलानिप्रेमपरवशतयावशासुवितरि
तुंस्वसृक्काविन्यस्तजग्धार्धसल्लकीपल्लवकवलानीवक्षणमलक्ष्यंत ॥ पद्यं ॥ सविधज्वलनोष्मवीचिभिः सपदिम्लानकपित्थशा
खिनां ॥ परिपाकसिताः फलव्रजाः प्रबभुस्स्फोटकबुद्बुदाइव ॥ ११६ ॥ निशिकेवलंनमसिदीप्ततनुंनिजजातिमौषधितरूनि

१ प्लोषः दाहः २ निकुरंबाणि समूहाः ३ वशासु करिणीषु.

पिकेतनेन ॥ १०४ ॥ मरुन्मनोमार्गणवैनतेयपृथग्जयाप्तैरविकीर्तिशावैः ॥ चतुर्भिरश्वैः समुपास्यमानंसफाल्गुनस्तंरथमारुरोह ॥ १०५ ॥ दशमुखनगरेपुरानुभूतंदहनहठात्करणंपुनर्दिदृक्षुः ॥ उपगनइवमारुतिः ससाक्षादुदलसदस्यरथाग्रकेतनांकः ॥ १०६ ॥ नद्भुजावनुधावंत्याः संग्रामेषुजयश्रियः ॥ जंघाद्वयधियंतूर्णौजनयामासतुस्तदा ॥ १०७ ॥ पवनसखदृशोर्मुदंवितन्वन्पटुतरटंकृतिकंपिताटवीकः ॥ कुटिलमतनुतासकृत्कराभ्यांगुणमपिदंडमिवास्यगांडिवस्य ॥ १०८ ॥ अथगरुडवलीमुखध्वजाभ्यामनुमतिमित्यससन्ननाहहर्षात् ॥ बलरिपुमणिनीलमुत्प्रवालंवनमशितुंवडवास्यभूरिवाग्निः ॥ १०९ ॥ शोणरुचाशिखयातिमहत्या बाणपुरावृतिवासनयेव ॥ चंडतरस्यवनस्यसमंतात्कुंडलनंकलयन्ववृधेऽग्निः ॥ ११० ॥ प्रथमंपावकषिंङ्गेपरिरभ्यगृहीतपल्लवोष्ठपुटे ॥ उपकंठंवनराजेरुदगादाकुलकपोतनादततिः ॥ १११ ॥ गद्यं ॥ क्रमेणप्रवलीभवतोभगवतः पवमानसखस्यतमालादिषुकेषुचित्द्रुमेषुपत्रोच्चयायमानैर्धूमैः किंशुकादिषुकेषुचित्स्तबकायमानैर्ज्वालाकंदलैस्तिलकादिषुकेषुचित्पक्त्रिमफलर्बी

१ उत्प्रवालं उत्कृष्टाः पल्लवाः विद्रुमाः श्रयरिमत् २ वनं अरण्यं उदकंच. ३ षिङ्गेजारे ४ उपकंठं समीपदेशंकंठेच.

धोभगवानुद्दिदीपे ॥ तत्रांतरेप्रोषितवल्लभतयाप्रेम्णाकुमारमश्वमेनंनिगीर्यदहनार्चिरुष्णासहिष्णुतयापुनरपिनिवृत्यदिवंप्रयांतीभिर्घनधाराभिरिवपन्नगकन्यकाभिः सहवनादुत्पतंनींतक्षककुटुंबिनीमविलंबितमेवश्वेनवाहनश्शातमुखेनाशिलीमुखेनरसनायामिवग्रीवायांद्विधाविदालितांचक्रे ॥ पद्यं ॥ नभसिकृतेशरकूटेनपपाताशुगैविनुन्नमंबुमुचां ॥ तास्मिन्खांडववन्हौतक्षकपत्न्याः कबंधमेवपरं ॥ १२१ ॥ गद्यं ॥ अथसकुपितस्स्वयंकौशिकोपिचाकितचाकितांविनयाविहितोपसरणंनवजननीशोकदयनीयंल्हतवालंतमहिबालंपरिगृह्यलालनयापरितोषमनैषीत् ॥ प॰ ॥ सुतंतमभ्येत्यसुरैरशेषैः क्रुध्यन्नथायुध्यतघोरमिंद्रः ॥ चक्रेसदावस्यचतक्षकस्ययदाग्निमत्तांयदनाग्निमत्तां ॥ १२२ ॥ वनस्यतस्योपरिकेवलंतदासहस्रनेत्रस्यचसव्यसाचिनः ॥ निषंगनीडोत्पतितानिर्पत्रिणांकुलानिकोलाहलकेलिमादधुः ॥ १२३ ॥ शरान्विपाठानपिपारदृश्वनः श्रुतेर्विधायाशुविमुंचतस्ततः ॥ कुरूद्वहात्सा





१ शरकूटे शरच्छत्रे २ आशुगः बाणः वायुश्च ३ कबंधं उदकं मूर्धरहितं शरीरंच ४ कौशिकः इंद्रः नकुलश्च ५ ल्हतवालं पुच्छरहितं ६ अहिबालं सर्पपुत्रं वृत्रासुरंपुत्रंच अथवा ल्हतवालमहिवालं बवयोरभेदात् ल्हतवालं वालशब्दरहितं अहिवालं नामअहिंवृत्रं ७ अनाग्निमत्तां अग्निमत्ता अग्न्याधानादि कारस्त्वं तदभावं मृतपत्नीकत्वात् ८ पत्रिणां बाणानां पक्षिणाच ९ विपाठान् पाठरहितान् बाणविशेषांश्च १० श्रुतेः वेदस्य कर्णस्यच

खिलं ॥ इतरैर्विजेतुमिवैततरवोदिवसेपिजज्वलुरतीवतरां ॥ ११७ ॥ दृप्तदानवनिशाचरवर्गस्तत्रगांडिवभृतानिहतोपि ॥
तन्निषंगयुगबाणगणानांसंख्ययाप्रतिभटत्वमकार्षीत्[1] ॥ ११८ ॥ ज्वालतापभरकुंडलितांगीः क्ष्वेडसारघृतसेचनमृद्वीः ॥ सर्पपुंग
वततीरितिल्दृष्टः शष्कुलीरिवचचर्वकृशानुः ॥ ११९ ॥ तावत्तक्षकरक्षणायसहसाशक्रोऽधिरुह्यद्विपंवज्रंन्यस्यतदीयमूर्ध्निमरुतां
सन्नाहयन्वाहिनीं ॥ ब्रह्मांडप्रतिरोधनेनविमुखैर्धूमैरिवारण्यजैरातस्तारनभस्तलंजलधरैरारब्धघोरारवैः ॥ १२० ॥ गद्यं ॥ ततस्तै
र्नाकौकसामनीकैर्मत्सरेणतदुपरिनिपात्यमानदिग्भित्तिशिखराणामिववेगादापततांवारिधौवाडवहव्यवाहोपिकवलितोयमस्मा
भिरितीवविद्युतः प्रकाश्यगर्जितेनतर्जयतामिवपर्जन्यानामासारसर्वाभिसारेणनिर्वापितेवनेमनाकृश्यामायमानेसतिशोणायमान
लोचनेनकपिकेतनेनतत्प्रतिचिकीर्षया[2]शरकदंबैरंबरेनिरवलंबमाकलितांशरशालांछत्रीकृत्यपुनरपिसमुन्नीयमाननिजकेतु[3]रुधर्बु

१ प्रतिभटत्वं सादृश्यं यथा अर्जुनबाणाः असंख्याः तथा मृतानामपिसंख्या नासीदित्यर्थः २ तत्प्रतिचिकीर्षया तस्यप्रतीकारस्य निराकरणस्येच्छया.
३ निजकेतुः स्वध्वजः धूमइत्यर्थः

जोनिरंतरायमेवमहांतंसप्ततंतुमाहर्तुमनसः कौंतेयस्योपांतेरहासिमुहूर्त्तंसंमंत्र्यसाक्षादुत्साहप्रभावाभ्यां मूर्त्तौमंत्रइवतत्प्रहिताभ्यां गंधवहसुधांधोधिपनंदनाभ्यामनुसंधीयमानगमनोनदीतटाकैर्द्विमोतृकतयास्वपालयितारमिवानुकुर्वतोविविधान्यदुर्लभवसुधान्यसमेधितवसुधान्मगधानधिगम्य विशृंखलहर्षितगिरिव्रजम पिशृंखलाखेदितमहीभृत्कुलंजराघ टितदेहम पिदेदीप्यमानदेहबलसंपदमाशाजितारमपिपरार्थापहारजागरितारंमागधमपिविगीतव्यापारंद्विमातुरंमहारथंपृथिवीनाथमुपेत्यप्रधनंननाथ ॥ तत्क्षणमतितिक्षुतयात्वमष्टादशकृत्वोदृष्टापजयोस्ययंपुनारितरः किशोरइतिकृष्णावुभावप्यवधीर्यहिडिंबकुटुंबशोकोदयादारभ्यप्रवीरजनकर्णिकामौक्तिकायमानभुजकीर्तेरात्मनस्संमुखीनंदृढतरपरिकरबंधंसमीरकुमारः पंचदशादिनानिनियुध्यतेषांतृतीभागपरिसंख्यानपदाभिधेयेनसहघटयांबभूव ॥ पद्यं ॥ हतेतास्मिंस्त्रयोदीप्राहरिप्रस्थमुपाययुः ॥ आगामिनिमखेहव्यमादित्सवइवाग्नयः

१ सुधांधाः देवाः २ द्विमातृकतया नद्यंबुवृष्ट्यंबुसंपन्नतया ३ वसुधान्यानि द्रव्यसस्यानि ४ गिरिव्रजः पर्वतसंघः देशविशेषश्च ५ महीभृतः पर्वताः राजानश्च ६ जरा वार्धक्यं राक्षसीच ७ आशा दिशातृष्णाच ८ मागधं मगधराजं स्तुतिपाठकंच ९ विगीतव्यापारं निंदितव्यापारं पक्षे विगतः गीतव्यापारोयस्य १० प्रधनं युद्धं. ११ तृतीय भागपरिसंख्यानपदं पंचदशविशब्दः तस्य'भिधेयेन पंचत्वेन मरणेनेत्यर्थः

ध्वसरोगिणोहरेरभूद्भिषग्दूरतरापसर्पणं ॥ १२४ ॥ जयंतमेकंयुधिसोढुमक्षमेजयंते[2]मन्यंसुनमीक्षितुंगते ॥ पुरींबलद्विषिणिघोषकैत
वाज्जहासशंखद्वितयंचकृष्णै[3]योः ॥ १२५ ॥ ततः कृशानोर्वि[4]परीतवर्णस्वनामवाच्यादिवभीतभीनं ॥ मयंवनेदैत्यमयंररक्षसच
कृपाणेरविशक्रसूनुः ॥ १२६ ॥ क्षेत्रमप्याधिपातिंकुरुपूर्वसंश्रितौमपादिदैवबलेन ॥ चर्वितुः सकलखांडवमग्नेस्तै[5]क्षकावभजतांवि
[6]घसत्वं ॥ १२७ ॥ अथास्मित्वातुंदंपारिमृशातिमंदायितगतौसमापृछ्यप्रीत्यात्रिदिबमभियातेहुतवहे ॥ रथाभ्यांमौनिभ्यांघनसलि
लसेकेनमहताविजेत्रौतौकृष्णौविविशतुरूपांतंनरपतेः ॥ १२८ ॥ ॥ इत्यनंतभट्टकविकृतौचंपुभारतेतृतीयस्तबकः ॥ ॥
यातेततोनिजपुरींयदुवंशकेतौराज्ञेमयोमणिसभांरचयांबभूव ॥ यस्यारुचंसमवलोक्यशुचाऽधुनापिँजीवं[7]गतागनजुषंवहतेसुधर्मा
॥ १ ॥ तामधिष्ठास्नुमागत्यतंमखंकर्तुमन्वशात् ॥ विपंचीरवसारज्ञोनृपंचीरवसांवरः ॥ २ ॥ ग० ॥ ततोदूनाहूतः पुरहूतानु

१ भिषक् वैद्यः २ जयंतं इंद्रपुत्रं. ३ कृष्णयोः अर्जुन कृष्णयोः ४ विपरीतवर्ण स्वनामवाच्यात् मयइत्यस्य विपरीतवर्णवाच्यात् यमात् ५ तक्षकौ मयः सर्पश्च ६ विघसत्वं भोजनशेषं ७ जीवं गीष्पतिंप्राणंच ८ विपंचीवीणा.

केऽभूत् ॥ ११ ॥ बिंबेनसंगंबिसपुष्पबंधोर्नाथः कलानांनयथाविदध्यात् ॥ तथैवदेवास्ततृपुस्तदानीमत्यद्भुतानांहविषामशेषाः ॥ १२ ॥ सर्वेषुवर्णेष्वपिदातुरस्मात्संप्राप्तवत्स्वर्थमजातशत्रोः ॥ नवर्णएकस्तुकदापिलेभेनार्थक्रतूनामिह्सार्वभौमे ॥ १३ ॥ गद्यं ॥ तत्रनानाजनपदमेदिनीवल्लभमल्लमुकुटमणिकिरणपल्लविनेयज्ञवाटेत्रिपथापृथातनूजाभ्यांनियुक्तोवैमात्रेयैर्भ्रातृभिर्जंतुभवनवनसवनेषुपृथक्पृथगाराधिततयास्वेनाप्यातिथ्यायनिमंत्र्यमाणेनवीतिहोत्रेणवज्वलनाहेमपात्रेणपरिष्क्रियमाणपाणितलस्सहदेवोनिखिलभक्तजनकृत्यनिर्वाहभारेणेवनिभृतावयवंसभ्यलोकलोचनपक्ष्मयुग्मपंक्तिपरस्परवैमुख्यवदान्यरूपकोमलिमानंमहर्षिजनवलयमध्यमहेंद्रनीलरत्नंचिरत्नंपुमांसंसमासाद्यप्रथममर्घ्येणपरिपूजयांचक्रे ॥ पद्यं ॥ तावत्प्रकोपात्तरलाधरस्यप्रतिक्षितीशानभयानकस्य ॥ वेदीभुवंतत्रविहायवन्हिश्चेदीशितुश्चित्तमिवाविवेश ॥ १४ ॥ सदस्मिनविकृतोयदुच्युतोभूत्सतुपरुषाक्षरमंडले

१ विसपुष्पबंधोः सूर्यस्य २ हविषां हविर्भिः तृप्यतेर्योगात्षष्ठी. चंद्रः रविसंगं कृत्वाअमृतमाहरतितद्देवाः पिबंति यदितेषामन्यथाचरितार्थः स्यात्तर्हि देवमूलकं रविसंगं चंद्रः नकुर्यादितिभावः ३ वर्णेषु जातिषु अक्षरेषुच ४ अर्थं द्रव्यं अभिधेयंचं.

॥ ३ ॥ कृष्णेगतेयदुपुरींक्षितिपानुजानांजित्वादिशः प्रतिनिवृत्तवतांचतुर्णां ॥ कौशेममुः परमसिप्रवरागृहीतादोष्णोर्बलेनमहता नतुहेमपुंजाः ॥ ४ ॥ उपायनत्वेननृपायसर्वैर्दत्तेषुवित्तेष्वखिलेषुभूपैः ॥ पार्थस्यपुर्याः क्षितिरेवभेजेवसुंधरावाचकवाच्यभावं ॥ ५ ॥ नरदेवमगाज्जयेप्रतीच्यानकुलेनैववसूनिविस्मृतानि ॥ दधदानकदुंदुभिस्वनैर्व्यादलयन्नानकदुंदुभेः कुमारः ॥ ६ ॥ हरिणासततः कृताभ्यनुज्ञोहाविरादातुमिवागतेनसाक्षात् ॥ क्रमविद्भिरथर्त्विजांसमाजैः क्रतुमाहर्तुमुपक्रमंप्रचक्रे ॥ ७ ॥ प्राग्वंशेप्युत्तमेतिष्ठन्प्राग्वंशंपुनराविशन् ॥ कुरीराशिरसापत्न्याकुरुवीरः सदीक्षितः ॥ ८ ॥ आप्सातुमिच्छुरनलोहविरत्ररुध्यमानील धूमकुलनिर्गलनापदेशात् ॥ जग्धान्पुराजतुनिकेतनभित्तिखंडान्कुक्षिस्थितानिवववामगुरूनजीर्णान् ॥ ९ ॥ तत्रप्रवर्ग्यजनितंदिविधूमचक्रमालक्ष्यतेस्मविबुधान्प्रतिपावकेन ॥ आनाकर्दुवहहविर्द्रविणेनवेगादाव्हानपत्रवलयंकिलनीयमानं ॥ १० ॥ मेदस्विनंविपुलखांडवभक्षणेनदेहंनिजंचलयितुंशिखिनोक्षमस्य ॥ उद्भ्रम्यसंज्वलितुमुत्तरवेदिकायामालंबनायकिलयूपवरोऽति

१ कोशे खड्गपिधाने भांडारगृहेच २ प्राग्वंशे प्राक्पूर्वं वंशोइतिपदच्छेदः पक्षे प्राग्वंशं हविर्गेहपुरोभागं ३ कुरीरं तंतुनिर्मितं [illegible] ४ प्रवर्ग्यं यज्ञकर्म

यामिमांशुचं ॥ २० ॥ गद्यं ॥ इतिनिगद्यव्रीडाव्ययानद्योः संगमेनिमग्नमेनमभग्नकैतवबंधोगांधारपतिरुत्तारयितुमेवमुत्तरमाद
त्त ॥ पद्यं ॥ जय्यतांकथमुपैतितेर्जुनोवत्सयद्युधिभयात्पलायिनाः ॥ केवलंहरिमुखाननामनोवेगतोप्यस्मिरुतोभवन्सुराः ॥ २१ ॥
अपिच ॥ तंवीक्षितुंजगतिशक्नुयुरत्रकेवाभीमंप्रकोपधृतभीमगदांकबाहुं ॥ एकैकमुष्टिहतयेस्मभवंतिनालंयस्याहवेबकवृहद्रद्रथ
भूहिडिंबाः ॥ २२ ॥ ताभ्यामुपास्यमानस्यतपसस्तनुजन्मनः ॥ व्यापादेपिप्रसक्तिः काविशेषान्मादृशांरणे ॥ २३ ॥ ग० ॥
तथाप्यहंतुतवचतेषांचपरस्परस्यविभवेपरिपणनपदाधिरोहिणिक्षणादक्षममाणेनजगत्सामान्यतामक्षसंप्रदायेनतंपराजयघंटापथे
संचारयिष्यामीति ॥ प० ॥ वित्तेल्हनेदरिद्रास्तेविमृष्टावंधुभिः स्वयं ॥ विनाशंवांशुचायायुर्विदेशंवाथलज्जया ॥ २४ ॥ त्वंतत
स्तुसुखमात्मसंयुतैस्सोदरैस्समदृशासंख्यकास्समाः ॥ नीरराशिहरिनीलमेखलांनिः सपत्नमनुभुंक्ष्वमेदिनीं ॥ २५ ॥ ग० ॥
इत्थंकारंरहामिकल्पितेकैतवदुरध्वेतावुभावप्यनुधावितुंदिव्यचक्षुषातेनांधेनवसुंधराधिपतिनानवमणिमंडपिकाप्रवेशोत्सवव्याजा

१ उत्तरं प्रतिवाक्यं नौकांच. २ मरुतः देवाः पवनाश्च ३ तपसः यमधर्मस्य ४ व्यापादेद्रोहचिंतने ५ घंटापथे राजमार्गे.

नशत्रोः ॥ बहिरिवसंदुपेत्यतच्छ्रवोभ्यांबहुतरकुंडलनीलरत्नलक्ष्यात् ॥ १५ ॥ अश्लीलवागिहसमाप्तिमतीनवेतिसंद्रष्टुकाममिव दानववैरिचक्रं ॥ कल्पांततिग्मकरकल्पमनल्पवेगंकंठेबिभेदरणसीमनिदामघोषिं ॥ १६ ॥ ग० ॥ इतितस्यदुर्मतेरायुषासहस मापितेसवनकर्मणिनिर्मितावभृथाप्लवनेमुपदात्वेनदत्तपूर्वाणिवित्तान्युत्तमर्णानिवपुनर्द्विगुणमेवग्राहितान्सर्वानुर्वीपतीन्प्रस्थापि तवंतंपौरवंतमनुज्ञाप्यचैद्यनिधनोत्सवेनसुदर्शनस्येवपौरजनस्यापिनवास्रकणिकार्द्रतामनुभावितुमनाइवसनातनः पुमान्पुरींपुरा नुभूतकुशस्थलीनाम्नींप्रतस्थे ॥ पद्यं ॥ अंधभूपतनयोपिबलौघैर्हास्तिनंपुरमवाप्यविलक्षः ॥ सौबलिंगिरमसौबलवंतंदुर्विचार रचनासुचचक्षे ॥ १७ ॥ अग्नेरपत्यामितिहेमयदाहुरेतान्मिथ्यानमातुलविरोधिमखेनुभूतं ॥ तत्स्मर्यमाणमखिलक्षितिपोपनीतंनक्तं दिवंदहतिचित्तमिदंयतोमे ॥ १८ ॥ वल्गत्कुचंपरिजहाससभावलोकेमाद्रौपदीमणिभुविस्खलितंयदुच्चैः ॥ तत्साधुजातमितिव क्तुमिवस्नुषांस्वांमत्प्राणवायुरयमुत्क्रमणेच्छुरास्ते ॥ १९ ॥ अधुनायुधिसेनाभिर्विधुनानोधरातलं ॥ निधायनिधनंतेषुनिगृण्ही

१ सत् विद्यमानं २ उत्तमर्णान् धनको इतिप्रसिद्धं. ३ अस्रं रुधिरं अश्रु च.

न्या ॥ ३१ ॥ धर्मजन्माततः कर्मनिर्मायाहर्मुखोचितं ॥ मभांसभासुरांपौरैर्भूयः प्रापाक्षदेविभिः ॥ ३२ ॥ गद्यं ॥ तत्रचित्रीयमा
णेष्वनल्पचतुरिमजल्पाकेषुसभाशिल्पेषुदृशंपरिकल्पयतः प्रज्ञादृशं निकषोमूर्तेगुणइवतृतीये दिविषदृषभनीलदृषदासनेनिषीदतो
ऽमुष्यकुरुकुलप्रदीपस्यप्रतीपंनिविशमानः शकुनिस्स्थानानुद्दशयितुंसाक्षात्कृतमन्निाधिरमध्यमवर्णयातदीयाभिख्ययावाच्योग्रह
विशेषइवप्रासंगिकेनपथादुरोदरविहारेवतारमचिरादभिरोचयामास ॥ पद्यं ॥ अथसदसिमहत्याचाज्ञयासौनियत्याः सुमतिमपि
विमुह्यद्यूतमार्गेप्रवृत्तं ॥ वहुषुजनपदेषुप्राप्तवल्गुग्लहत्वंमपादिसुवलसूनुर्धर्मसूनुंविजिग्ये ॥ ३३ ॥ एकेनयत्सुबलभूर्युगपद्गृहीतु
मैक्षेणसर्वविषयान्नृपतेरशक्नोत् ॥ अस्मात्परंजगतिवाच्यनयाऽभ्युपेत्यनिष्ठेताकिन्नुपरमाद्भुतवाचकाय ॥ ३४ ॥ प्रतिदेवनमेवमेवभू
षाः प्रचुरान्रत्नचयांश्चहेमकोशान् ॥ सहजान्सहजाययास्यजित्वामनुगांधारपनिर्जगर्जहर्षात् ॥ ३५ ॥ घटीचेटीनोभूद्बहुपति



१ अक्षदेविभिः कितवैः जुगारी इतिप्रसिद्धं २ निकषासमीपे ३ प्रतीपं संमुखं ४ नियत्याः दैवस्य ५ अक्षं इंद्रियं पाशश्च

दाहूतः सानुजोधर्मानुजः कुरुपत्तनमुपेत्यबंधुतयाप्रत्युद्गम्यमानोदुस्तरंभाविवनवासवर्षमेकैकमेकैकप्रणिपातपुण्येनसुप्रतंरकरि
ष्यन्निवपितृव्यंद्वादशकृत्वः पादयोः प्राणंसीत् ॥ ५० ॥ अवभृथांबुकणैरिवनूतनैरधिगतामथजालकमौक्तिकैः ॥ स्वकबरींद्रुप
दस्यसुतापिसासुबलजापदयोस्समनीनमत् ॥ २६ ॥ अनुजाभिरनामयानुयुक्तैरभिनंद्यक्रतुलाभलालनाभिः ॥ सदनायमसर्जतं
विनीतंसधृताकारनिगूहनोमहीपः ॥ २७ ॥ तावन्मदीयतनुभेदिभटांतहेतुर्वैरंमिथः प्रभविताकुरुभूभुजांश्वः ॥ इत्यंतराहितशुचे
वदिशिप्रतीच्यांमंदायमानमहसारविणानिपेते ॥ २८ ॥ दिग्धेसंतमसैस्सांद्रैर्दिशापदिशचत्वरे ॥ सर्वाः प्रजास्तदाराज्ञः समा
रक्षन्दशातुलां ॥ २९ ॥ मनुजावलीनयनवर्त्मनेपुनर्मघवादिदेवममभावगोचराः ॥ ककुभोविभेजुरमृतांशुभानवः क्षणमेवताः प्रथ
मशैलरोहिणः ॥ ३० ॥ अथोपकार्यामधितिष्ठतोस्यसंदर्शनायानिशमापतद्भिः ॥ अशेषपौरैरतिबालमित्रैरशेषिकिंचिन्नतयारज

१ बंधुतया बंधुसमुदायेन २ अवभृथः यज्ञांतेस्नानं ३ अनामयं आरोग्यं क्षत्रियस्यानामयमिति ४ ककुभः दिशः ५ उपकार्या मुपरिगृहं.

हारेपिवर्द्धितानेकवाससः ॥ अं[1]बरप्रायतातस्यमध्यस्योभयथाप्यभूत् ॥ ४१ ॥ चैलानिकर्षन्नचिरमंबमूनुस्तस्यास्तुनग्नंकरणस्स
नाभूत् ॥ श्रमात्स्खलित्वाधरणौपतन्सन्दंतावलेरेवजनत्रजानां ॥ ४२ ॥ गद्यं ॥ अथतथाभूतपरुषयोषाभिषंगरोषकलुषेणपृषद
श्वजनुषापरिषदिभीषणमेवंबभाषे ॥ पद्यं ॥ उरसिस्खलदूष्मलंमृगाक्ष्यास्समिता[2]वस्रमिदंयथाहमक्ष्णा ॥ द्विषतः कचकर्षिणोप्यमु
ष्यारसनेनानुभवेयमेवमेव ॥ ४३ ॥ गद्यं ॥ किंच ॥ मरमीवाविचलत्क[3]वंधवंधुरेसमराजिगेतामरसच्छदानिवशतमपिविमतान्हेमंत
इवाहंधा[4]र्तराष्ट्रशब्दशेषांमहागदा[5]पत्तिंगमयिष्यामीति ॥ तत्रसुत्राम्णः पुत्रोप्येवंप्रतिजज्ञे ॥ पद्यं ॥ उत्से[6]कात्कनहस्ततालममु
नागांधारपुत्रीभुवाराधामूनुरसौजहाममदामिग्राम्यंब्रुवन्यत्ततः ॥ यस्यांजात्वपिदेहिनोभ्यु[7]दिततानै[8]र्वाभिनिर्मुक्तनास्यानांद्वेअपि
गांडिवोममतुतांनिद्रामममुंनेष्यति ॥ ४४ ॥ गद्यं ॥ इतितयोस्ताट्टशेनवीरवादेनमुखामिहास्वेतिकरास्फालनदर्शितेसाक्थिन्येवत

१ अंबरप्राप्तता आकाशसादृश्यं वस्त्रबाहुल्यंच २ अस्रं वाष्प रक्तंच ३ कबंधं जलं अपमूर्धकलेवरंच ४ धार्तराष्ट्राः धृतराष्ट्र पुत्राः हंसाश्च ५ गदापत्तिं रोगेण विपत्तिं पक्षेगदया ६ उत्सेकात् गर्वात्. ७ अभ्युदितता सूर्योदयकाले निद्रितत्वं ८ सूर्यास्तकाले निद्रितत्वं.

जधूटोद्रुपदजांवराकींतामत्रानयपरिषदीत्यग्रजागिरं ॥ हरन्द्वै[1]नीयीकः सुबलतनयासूनुपुजवात्समुत्तस्थौसाक्षाद्दुरणिमवतीर्णोय
मइव ॥ ३६ ॥ दृष्ट्वाभियासदसिधांवनमाचरंत्याः कैश्येचकारसकरांगुलिमाननांग्याः ॥ वक्षोरुहेषुचमहीपपुरंध्रिवर्गानासाग्रसं
न्निसुधियश्चनदीसुताद्याः ॥ ३७ ॥ गद्यं ॥ तत्रसदुर्मेधाबलवदाकर्षणभयोद्विदुराणिस्वेदपृषंतीवभूषामुक्ताफलानिधारयंत्याश्चि
कुरभरात्करतलनिष्पीडनानिर्गलितांकालिमधारामिवानिर्भरकुवलयगर्भकमाल्थरमञ्जरीमश्रुभिस्सहवर्षत्यास्तस्याः पातिव्रत्यल
क्ष्मीनिवासस्फटिकप्राकारामिवदुकूलमपहर्तुंप्रावर्मत ॥ पद्यं ॥ तादृक्षेसमुपस्थितेपरिभवेमभ्येपुवाचंयमेष्वाध्यायत्सुविधेर्बलंस्व
दयितेष्वन्येष्वशक्तेष्वपि ॥ निश्चित्यार्नैमनांगतिंयदुपतिर्नाव्यांकरौकुर्वनीसाचक्रंदतमुच्चकैरिहहरेत्रायस्वहामामिति ॥ ३८ ॥
तस्यांसभायांहियमाणवस्त्रात्तन्व्यानितंबात्सहसाविरासीत् ॥ कंसारिकारुण्यपयः पयोधेः कल्लोलमालेवदुकूलपंक्तिः ॥ ३९ ॥
त्दृतेत्दृतेवासासित्दृद्यरूपंवासोंतरंयद्ववृधेवरांग्याः ॥ नरस्यतेनैवनकस्यतत्रचित्तस्यनाव्यो[2]जानिचित्रपूरः ॥ ४० ॥ अदृश्यस्याप

१ द्वैतीयीकः दुश्शासनः नमात्वं नामपापानामित्यभिधानात् कंठतः नामनोक्तं. २ नाव्यः नौभिस्तार्यः महानितियावत्.

न्हुमुनिकर्णशष्कुलिकापथेनशिक्षितैर्गतिविशेषैरिवगंभीरैरावर्त्तैर्हृपासकजनादात्हृता निसंसारचक्राणीवदर्शयंतींकोकनदवद
नोदीरितैरिवकोककुटुंबिनीकूजितैः कुमारस्यदेवव्रतस्यकुशलमिवपृछंतींभागीरथींपुरस्कृत्यतत्रतांनिशीथिनींपश्चाचक्रुः ॥ अ

४०

परेद्युरतिमात्रबुभुक्षितानुयात्रिकसत्रिजनपरित्राणायपवित्रैस्स्तोत्रैःप्रसेदुषाचित्रभानुनादत्तमक्षय्यमन्नपात्रमादायकलत्रेनिदधुः॥
॥ ५० ॥ वनंततः काम्यकमेत्यतेषुवसत्सुभीमस्तुनियोद्धुकामं ॥ किर्मीरमुग्रंकुणपाशनेंद्रंक्षिप्रंतदाहारदशामनैषीत् ॥ ५० ॥
ततश्चिरंद्वैतवनेससार्धवध्वाकदध्वालसनामवुध्वा ॥ मूलानिमर्वस्यशुभस्यभूपोमूलानिजग्राहमुनींद्रसंघात् ॥ ५१ ॥ तत्राथतेस
त्यवतीसुतस्यपादारविंदात्प्राविसृत्वरीभिः ॥ नखप्रभाभिर्नवपुष्पपंक्तीर्जटालतानांजनयांबभूवुः ॥ ५२ ॥ तस्मिन्कैवैतापसयू

४०

थनाथैस्वातीमिवाजग्मुषिवासभूमिं ॥ तेषामनिक्षामतयायुतानांशुचाक्षिदेशेष्वतिवृष्टिरासीत् ॥ ५३ ॥ प्रसृमरतनुभासाप्रावृषे
ण्यान्समेघान्दिशिदिशिविदधानोदीर्घदर्शीतदानीं ॥ कुरवइतिमहांतंशब्दमाबिभ्रतोपिस्ववचननिपुणिम्नातानशोकानकार्षीत्

१ तदाहारदशांतस्य राक्षसस्य आहारःशवंतस्यदशां २ कवौव्यासे शुकेच ३ कुरवइति कुरवकइति पक्षे इत्यस्य बहुवचनं ४ अशोकान् शोकरहितान् वृक्षविशेषांश्च.

वमृत्युः स्यादितिसुयोधनंप्रतियाज्ञसेन्याः शापेनचभयात्तगंधर्वाभ्यामंधदंपतिभ्यांयथापुरंराज्यंप्रत्यर्प्यहरिप्रस्थंप्रस्थापितोयुधिष्ठिरः पुनरपिकृतमंत्रैरमित्रैराहूतमात्रोयमर्द्धपथाद्विधिनागलहस्तिकयानिवर्तितइवतामेवसभांप्रत्यावर्त्तत ॥ पद्यं ॥ भूताभिविष्टइवबोधवतांवरोपिभूयोपिधर्मतनयस्सहसौबलेन ॥ आधत्तदेवनविहारमनार्यजुष्टमाद्याक्षरंविजहदेवपणोऽपिसोभूत् ॥ ४५ ॥ कितवेशकुनौवशंवदान्किरतिस्वेनकरेणपाशकान् ॥ विजयेनसदापुरस्कृतोप्यभवत्तेनसपृष्ठतः कृतः ॥ ४६ ॥ उत्थायाथक्षितींद्रः क्षणमपिधरणौस्थातुमस्यांनयुक्तंप्रत्यर्थिस्वीकृतायामितिसहसहजैः सत्यसंधस्सजानिः ॥ पाणौक्षत्तुर्निधायप्रसुवमतितरामंतरुत्तप्यमानांपभ्द्यांप्रापद्वनानिव्यथितहृदमुचत्पौरलोकस्तुदृग्भ्यां ॥ ४७ ॥ कांतारमीमानिमृगाः पुरतोनिषण्णाः शांताकृतेस्सधनुषोपिनिषंगिणोपि ॥ उत्थायतस्यपटुमर्मरचारुचीरंरोमंथलोलचिबुकेनमुखेनजिघ्रुः ॥ ४८ ॥ परागपूर्णपथितस्यपादरेखाघटस्यप्रतिमामनोज्ञाः ॥ भक्त्योपनीतावनदेवताभिः पाद्योदकुंभाइवजाग्रतिस्म ॥ ४९ ॥ गद्यं ॥ क्रमेणतेविलंघ्याविविधानिवनानिज

१ आत्तगंधाभ्यां पराभूताभ्यां २ गलहस्तिकया अर्धचंद्रेण. ३ वनानि अरण्यानि जलानिच.

[illegible]तपसानुमाले प्रविष्टदृष्टिं परितस्तमग्निः ॥ भूयोपिभोक्तुंविपिनंदिदृक्षोसिप्रेम्णोपरुंधन्निवदृश्यतेस्म ॥ ६२ ॥ तपोविधौ तपावकेनसर्वदिक्षुवासाविस्तदाबभूववेष्टितोधनंजयत्वबांधवात् ॥ अजीजनत्तमंगराजमंगवैरिणंभवानितीवरोषितोदिनेशएव चक्षुराक्षिपत् ॥ ६३ ॥ पाराशरिप्रापितमंत्रभागैराराधयन्शंकरमंतरंगे ॥ सप्तापिचर्षीस्तपसाविजेतुंसप्तत्वमापस्वयमेकएव ॥ ६४ ॥ फलपर्णजलानिलाशनानिप्रविहायक्रमशस्तपस्यतोस्य ॥ विषयेषुनलोलतांप्रपेदेविजयस्याक्षगेणः कराग्रएव ॥ ६५ ॥ तत्ताद्दृशेनतपसातरुणेंदुमौलिस्तन्वन्कृपापरवशंतनयोमघोनः ॥ पादाग्रमेवधरणीप्रणिधायतस्थौप्रोद्यम्यबाहुमुपरीवफलानिलिप्सुः ॥ ६६ ॥ निरुध्यवायुंनिभृतंतपस्यतः शिरः समुत्थादशादिग्विसृत्वरी ॥ नटत्स्फुलिंगानवधूमसंततिः स्फुटीचकारास्यधनंजयाभिधां ॥ ६७ ॥ तस्याथनारदमुखात्तपसः प्रभावंश्रुत्वाहरस्त्रिगजतामधिपोदयालुः ॥ देव्यादृशासदसिसूचिततद्दिदृक्षोदिस्सन्नभीष्टमपिलुब्धकतामयासीत् ॥ ६८ ॥ हेरंबगंडमदपंकविशेषकांकौस्कंदौपबाह्यशिखिपिच्छविलाससचूडौ ॥ भूषानदीतटतरुच्छ

१ सप्तत्वं सप्तसंख्याकत्वं पक्षे [illegible] २ अक्षगण इंद्रियसमूहः रुद्राक्षसमूहश्च ३ लुब्धकतां लोभविशिष्टत्वं किरातत्वंच ४ विशेषकं तिलकं.

त् ॥ ५४ ॥ अस्मात्प्रतिश्रुतिरितिप्रतिपद्यविद्यामालिंग्यधर्मतनयेनविसृज्यमानः ॥ पार्थोहिमाचलमगात्परमास्त्रमाप्तुंशंभोः कृ
पाजलनिधेश्चरणार्चनाभिः ॥ ५५ ॥ यस्मिन्हिमानीभृतियक्षवृंदमंगेषुसर्वेष्वपिमंजुलेषु ॥ नखंपचोष्णंमलिनेक्षणानामुरोजमे
वातितरामुपास्ते ॥ ५६ ॥ योवत्सतामेत्यवसुंधरायानिपीतरत्नावलिकांतिपूरान् ॥ मनः शिलावप्रझरीमिषेणदरीमुखैरुद्गिर
तीवतृप्त्या ॥ ५७ ॥ आरोहतस्तंतरसासमीरकिशोरकः स्वेदजलाणुराजिं ॥ निपीयतस्याननपद्ममाध्वींद्विरेफभावंप्रकटंचिका
र ॥ ५८ ॥ शिवाख्ययोरेकतनुत्वकारणंत्रिलोकपित्रोर्महसोस्तपोवनं ॥ मिथोर्च्यमानंमिथुनैस्तपस्विनांतथेच्छुभिस्तत्रननामपांड
वः ॥ ५९ ॥ तत्रदर्भदलमुष्टिमाहरन्सन्निधास्यदृषभोपदामिव ॥ चित्तमीशपदयोः समादधत्तप्तुमारभतदुश्चरंतपः ॥ ६० ॥
चतुरस्तपः [illegible]विशेषविधौचरणंनिधातुमखिलेननिजं ॥ सजुगुप्समानइवशात्रुजितेप्रपदेनतिष्ठतिभुवस्समतले ॥ ६१ ॥ भा

१ शीतकालेभवेदुष्ण इत्यभिधानात् हिमालये स्तनानां अतीवोष्णत्वं युज्यते २ समीर किशोरः मंदवायुः अस्मिन् शब्दे रेफद्वयं वर्तते तन्मनसिनिधाय कविः अर्जुनमुखकमलस्वेदमधुपानेन तस्य द्विरेफत्वं बोध्यं भ्रमरत्वं प्रतिपादयति. ३ सन्निधास्यत् ऋषभः समीपवर्ती वृषभः

ष्यमाणजयशब्दौतौजगदादिमौदंपतीसविनयमुपासीनस्यशुनासीरसुतस्यतपोवनसीमानंशनैः शनैरासदितां ॥ तत्रखलु ॥ पद्यं ॥ व्याघादलंबिजटमातपमात्रभक्ष्यमूर्ध्वीभवद्भुजमुदारतपः कृशांगं ॥ दृष्टथानुगृह्यकुरवीरमुनींद्रमेनंत्रेधाबभूवसुतवत्सलताभवान्याः ॥ ७१ ॥ क्षोदयन्नथमहींखुरपातैः कोपिकोपकुटिलोवनकोलैः ॥ घोरघूत्करणघोणमुपागात्कुक्षिमाश्रमभुवः कुरुसूनोः ॥ ७२ ॥ तंवीक्ष्यरौद्रवपुषंमृगशावकेषुत्रासाद्दिशत्सुकटिलंबितवल्कभागान् ॥ पर्याकुलैकलकलैरपिपक्षिजालैपार्थोनिवृत्यनियमाज्जगृहेशरासं ॥ ७३ ॥ मुनिरेषयदाभ्ययाद्वराहंमुखरज्यालतिकोजवाज्जिघांसुः ॥ शबरोददृशेतदानुधावन्धनुराकृष्यसहानुयायिवर्गैः ॥ ७४ ॥ मामुंचबाणंमदनुद्रुतेस्मिन्नपेहिजाल्मेतिकिरातनेतुः ॥ वचः सलक्ष्यंमनसोनकुर्वन्वराहमस्त्रस्यचकारलक्ष्यं ॥ ७५ ॥ शिलीमुखाभ्यांशिवसव्यसाचिनोः समुज्झिताभ्यांयुगपत्किटिस्तदा ॥ समंविभज्यायुरभुज्यतक्षणात्सहोदराभ्यामिवपैतृकंधनं ॥ ७६ ॥ ततः कुपितोपिकुरुवीरस्तपः शांततयानातिपरुषमेवमुवाच ॥ अस्मिन्ममावसथमापतितेमयाप्रागलक्षीकृते



१ कोलः वराहः २ जाल्मः असमीक्ष्यकारी.

[illegible]कृतवल्कीकौदांडिमीच्यरचतांकुहनाकिराती ॥ ६९ ॥ शबरत्वजुषोवरस्यपुंसः शशिखंडानुशकारसंनिधानं ॥ भजतिस्मत
[illegible]भागंभगवन्मस्तकभूषणंयदेषः ॥ ७० ॥ गद्यं ॥ तदानीमेवरजतागिरिशिखरान्निर्गच्छंतौकिमेतदितिसांशयिकैरपितद्
[illegible]चित्रवेषविरचनाकुलैःपारिषदकुलैः परिवार्यमाणौसमुच्चालितलांगूलमितस्ततोधावद्भिर्दूरचारश्रमविदारितवदनलंबमा
[illegible]निपातिनीभिःसृणिकाकणिकाभिर्वनपत्यतिंशुद्धतरीमिवकुर्वद्भिर्द्रुततरश्वसितकंपमानावयवैस्तेषुतेषुवनगुल्मेषुश्वापदा
[illegible]व्यहुंकारमाचरद्भिर्विश्वनिगमविश्वकद्रुभिर विमुच्यमानपार्श्वभागौदीपकमृगायमाणनिजहरिणशावकानुधाव्यमा
[illegible]भागौप्रशमिततुहिनजडिमोद्वेगेनभा विनिपदेपदेवनदेवताभीरच्यमानतरुप्रसवास्तरणेन हिमवतः कटकपथेनसविला
[illegible]कौपतावदृष्टपूर्वावनमस्मदीयमाक्रमतइतिरोषकषायिततयानिवारयितुकामैरपितेजो विशेषप्रतिहतोत्साहैरन्यैः शा
[illegible]जटावल्करीमूलमुकुलीभवदंजलिभिस्तपस्विपुंजैर्नभसिविमानवेगंनिरुध्यहर्षाश्रुभिः सममभिवृ

१ कुहना कपटं किरातवेष साधनानि गृहस्य[illegible]त्यर्थः २ सांशयिकैः संशयापन्नैः ३ सृणिका लाला ४ विश्वनिगम विश्वकद्रुभिः अशेषवेदैः[illegible]

षाणिमिषांसवोपि ॥ देव्याविलोक्यवदमांस्मितगर्भमंतंतूणार्धकृष्टविशिखेनकरेणतस्थुः ॥ ८२ ॥ अथभिल्लमल्लकुरुवल्लभावुभौ
परिकुञ्चमल्लकुलशल्यपल्लवैः ॥ स्थगितावलोकसरणिंदिवौकसांसमरंभयंकरजवंवितेनतुः ॥ ८३ ॥ [illegible]यसंमिमगाहुरिमबाणैः
श्रवणांतविकृष्टपाशसूत्रघर्षात् ॥ प्रमथेशमवाकिरत्तदीयंप्रतिमालिंगमिवप्रसूनपुंजैः ॥ ८४ ॥ सरूषीवहरेविकृष्टचापेसहसाशैल
सुताविजातशंका ॥ मघवत्सुतमंगलायदेवीमनसायातइषुश्रुतिंजजाप ॥ ८५ ॥ ससंभ्रमाकृष्टधनुर्गुणोपिशंभुः कृपांभोनिधिमार्गि
तसूनी ॥ संबद्धमात्रान्कतिचिच्चदेहेचक्रेऽपरोद्धान्कतिचिच्चबाणान् ॥ ८६ ॥ विगाह्यशंभुंविजयस्यबाणाः पुनः प्रदत्वंपुपुषुर्नि
[illegible]ः ॥ वैरादुदारादभिगम्यलब्धंनमार्गणायांतिखलुप्रकाशं ॥ ८७ ॥ निस्वंनिषंगयुगलेनितराममर्षीचापेनमूर्ध्निमिहिरांपुर
[illegible]देव्याः ॥ पार्ष्णिप्रमुक्तधरणिः प्रजहारवेगात्कुर्वन्व्रणंसकुटिलंशशिखंडमिव ॥ ८८ ॥ धनुषाभिहतात्समुत्थितैर्धरैकन्यारमण

१ [illegible] यातइषुरिति शिवधनुर्बाण सुखावहत्व प्रार्थनार्थां श्रुतिंजजापेति परम कारुणिकत्वं व्यज्यते. २ अपराद्धान् व्यु[illegible] ३ मघवत् तनुजन्मनः अर्जुनस्य ४ मार्गणाः याचकाः बाणाश्च ५ धनुः फल्गुनः.

शबरस्यप्रल्हत्तंत्वयातत् ॥ शापस्यवाऽथधनुषोऽसिवशस्तथापिसोढंममाद्यतपसाचभुजोष्मणाच ॥ ७७ ॥ गद्यं ॥ इतितस्यमुनेरंतर्द
र्परसपरीवाहवेणीमिववाणी माकर्ण्यक्षोणीधरधन्वापिसास्मितंप्रत्यभाणीत् ॥ पद्यं ॥ मृदुबुद्धिरंगवचसैवलक्ष्यसेमृगहिंसनंविपिन
सीमनीदृशं ॥ शतशः स्वधर्मइतिपठ्यतेबुधैः शबरस्यवावदतपोधनस्यवा ॥ ७८ ॥ गद्यं ॥ तत्स्वकुलाचारादप्रमाद्यतेमह्यमयुक्त
कारिणापित्वयाकियद्दूरंप्रकाश्यतेतपसिबाहावप्याहोपुरुषिका ॥ पद्यं ॥ संदृश्यतेखलुतपस्तवशुद्धमेतद्यज्जंतुहिंसनविभीदृढब
द्धकक्षं ॥ आस्तामिदंभुजबलंचमृगात्ययेस्मिन्साहाय्यकंयदुपजीवतिमेशरस्य ॥ ७९ ॥ ईदृशंवचनरीतिमपास्यन्नेहिसांत्वय
कियानसिमेत्वं ॥ अक्ष्णाकिंचिदरुणिम्निजगत्यामंतकोपिमदर्तावाबिभीयात् ॥ ८० ॥ गद्यं ॥ इतिशंकरस्यन्यक्कारवादेनसातं
कः कुरुशशांकः पुनरपिगिरंकामप्येवमंकुरयामास ॥ पद्यं ॥ यस्माद्वनेचरकुलाधमजल्पसित्वमेवंमनः पुलकयन्स्वजनस्यदृप्तः ॥
तस्मादसंशयमुपांतजुषः किरात्यास्ताटंकमेवसहसेनकपोलमित्रं ॥ ८१ ॥ तादृग्वचः श्रवणदाहिमुनेर्निशम्यसर्वंगणात्ह्रादिक

१ परीवाहः जलोच्छ्वासः २ अप्रमाद्यते अवहिताय ३ आहोपुरुषिका युद्धसामर्थ्य संभावना.

 मे निरुद्धस्सिद्ध मिथुनहाहाकारस्तीरवणदूरोत्सर्पिवीचिवेगोत्पाटिताकृष्टमुनिजनपर्णशालासहस्रसुरस्रवंतीपूरोर्दर्वीकराविभुक 
परास्त्रवीकरणपटुतरभारोयमुर्वीधरपतिरासीत् । पद्यं ॥ अवाङ्मुखत्वेननिपात्यशंभुनासमुज्झितोयंददक्षेविमोहितः ॥ तवाय
 मामातनिमेदशामिमांनिवेदयेत्याद्रिमिवब्रुवन्रहः ॥ ९३ ॥ पार्थस्यतस्यभुजयोः परमेश्वरोसौवीर्यंविलोक्ययुधिविस्मयमानचे
ताः ॥ चापव्रणेसुरनदीकणसेकशंकामप्युत्सृजन्मुहुरकंपयदुत्तमांगं ॥ ९४ ॥ गद्यं ॥ तथाविधएवासौचिरादापतितचेतनाचरित
स्वागताचारः शनैः शनैः उत्थायपुरतोघंटाभरणघणघणात्करणसहचरेणकंठगर्जितेनकर्णयोः परिकल्पितसुधारसमोक्षेमहोक्षे
निवेदितवांसंभुजमूलप्रसारितगिरिजापाणियुगनखरेखांकुरधोरणीद्विगुणीकृतहारमणिरमणीयवक्षसंपारिषदगणांजलिकमलवन
मध्यराजहंसायमानंमार्दवभरितशार्दूलचर्मनिर्मितपल्यंयनांकोपरिभागातिर्यगर्पितैकचरणपल्लवसंवाहनपरेणशिलादकुमारेणच 
दर्पसमुल्ललननिवारणायमुखबंधनकनकशृंखलेनिरुध्यमुहुर्मुहुःकरपुटास्फालितककुदशृंगेणभृंगिरीटिनाचलक्ष्यमाणोभयपक्षमा

१ दर्वीकरविभुः सर्पराजः शेषः २ पल्ययनं पृष्ठासनं ३ ककुदं वृषांगं.

[illegible]म् ॥ विपुलैरविरलकशीकरैर्विक्षिप्तेमणिभिः फणाभृतां ॥ ८९ ॥ देवस्यतस्यजगतांजनकस्यचित्तेपार्थप्रहारजनुषः [illegible]मदांकुराः ॥ [illegible]नदीतटभुविद्विषवल्कबाल्यवप्रक्रियाभिरुदितः प्रमदः कणोभूत् ॥ ९० ॥ गद्यं ॥ [illegible] [illegible]तथाचिरमयमस्मत्कुलविरोधीतिक्रोधनैस्तस्यजटावनकुटुंबिभिः कुंडलिभिर्भक्षित[illegible]नालम्[illegible] ॥ [illegible]वा[illegible]र्ययः किममुष्यमायाकिमिति चिंतापरतंत्रेणा पिधैर्यदत्तहस्तोत्साहेनं तिष्ठजडात्मन्नेवमर्जुनं निर्जित्ययशो जितुमिच्छ [illegible]तर्गमेनसितवाहनेनवृषभवाहनंप्रतिनियोद्धुमारेभे ॥ पद्यं ॥ परुषेमुनिमुष्टिताडनेपतितेलुब्धकवामवक्षसि ॥ शिथि [illegible]गलुः किरातिकायाः सितगुंजामणिहारयष्टयः ॥ ९१ ॥ उपवासकृशेभृशंमुनेरुरसिस्वीकृतमुष्टिमार्दवः ॥ प्रमहारहरो [illegible]त्परिहर्तुस्वामिवास्यत्द्धतं ॥ ९२ ॥ गद्यं ॥ इतिपरस्परमुष्टिप्रहारवृष्टिपरिमृष्टवनकुसुम[illegible]गुरा[illegible]सरभसमे [illegible]बाहुमाजटासुगृहीत्वापरेणवलयितगलनालौतौशाबरतपोधनौयदामहत्यामधित्यकायामापततां[illegible]टित[illegible]

1 [illegible]

यथानृतीयेनयुधिप्रवीरतवापराधेनभवामितुष्टः ॥ तथानभक्त्यातपसांविभूत्यातरुप्रसूनार्चनयाचबव्ह्या ॥ ९६ ॥ इतिसुधामधुरिमधुरीणंवचनमभिधाय ॥ तत्क्षणंधनुरिषूनपितांस्तान्सान्निधायाविभुरस्त्रमपिस्वं ॥ पांडवायधनुराहतिरीतेः पारितोषिकामिवप्रादिदेश ॥ ९७ ॥ तस्याथपाशुपतलाभदुरापदीप्तेरक्ष्णः समक्षमपरिप्लवपक्ष्मपंक्तेः ॥ आश्चर्यवृत्तिरखिलैरनुगामिभिः स्वैरंतर्दधे भगवानमृतांशुमौलिः ॥ ९८ ॥ ॥ इत्यनंतभट्टकविकृतौचंपुभारतेचतुर्थस्तबकः ॥ ॥ अथसाविधतपोधनैः कृताशीरमरपतेर्भृत्यासनः सपार्थः ॥ रथजितपवनंसमातलिः सन्रथमधिरुह्यमुदादिवंप्रतस्थे ॥ १ ॥ नाकमेत्यधनुरंकितदोष्णानायकोदिविषदामविलष्टः ॥ नामफाल्गुनइतिब्रुवतास्वंनंदनेनजगृहेपदयुग्मे ॥ २ ॥ पाणिनापरिमृशन्नमुमिंद्रः पक्ष्मलीकृतजयंतमहेर्ष्यः ॥ आदरेणधुरिनाकिगणानामासनार्द्धमधिरोपयतिस्म ॥ ३ ॥ सदसिवसतितस्मिन्सार्वभौमेकरूणांकपटशबरबाणैः कल्पितार्द्रव्रणोपि ॥ निखिलसुरवधूनांनेत्रसंघाः समेतानिशितकुलिशकल्पानिर्दयंसंनिपेतुः ॥ ४ ॥ आस्थानसीम्नितनयाद्रिरिशोनयुत्थमाक

1. पक्ष्मलीकृता प्रवृद्धा.

गंगांडीवदंडताडनपीडितंचूडाशशिनमाश्वासयितुमवतरद्भिरुडुनिकरैरिवसुरतरुकुसुमवर्षैरवकीर्यमाणंजटाभासितकुशचीरधारिभिस्तैरेवचतुर्भिराम्नायपुरुषैः परिपठ्यमानशतरुद्रीयबिरुदप्रबंधमंबरेसविभ्रमवलंबमानैस्तुंबरुप्रभृतिभिः सुरवैणिकैरुपवीण्यमानभक्तजनरक्षणापदानप्रकरणंकर्णपूरीकृततमालमंजरीमधुझरीमिषेणकटाक्षात्साक्षात्कृपामिववर्षंतंप्रज्वलद्भिः परिष्कारपन्नगफणारत्नैः नूत्नैः शरव्रणैरिवानुबध्यमानावयवमासन्नावतंसितशशिकलापरिगलितकिरणधारापातशीतासहिष्णुनेवदंतपटगर्भवर्त्तिनास्मितेनसूचितत्हृदयप्रसादंभगवंतंमहादेवमुद्वीक्ष्यपक्ष्मतटरुहानिमेषाविटपिसमुत्पाटनपटुभिः प्रमोदाश्रुपूरैर्नदीमातृकायमाणपुलकप्ररोहः सविनयमुपसृत्यपादारविंदयोः सहस्रकृत्वः प्राणंसीत् ॥ पद्यं ॥ स्वामिन्मयाजडधियात्वयिदेवदेववाचाशरेणधनुषादृढमुष्टिनाच ॥ यत्तेचतुर्विधमकारिरणेतदागः क्षंतव्यमद्यभवताकरुणार्णवेन ॥ ९५ ॥ गद्यं ॥ इतिविज्ञापयंतमेनंपारिजातपल्लवतल्लजप्रातिमल्लस्यपाणितलस्यपरामर्शनेनप्रमुषितव्रणवेदनांगंप्लवंगकेतनमनंगशासनोप्येवमवादीत् ॥ पद्यं ॥

१ उपवीण्यमानं वीणयागीयमानं २ परिष्कारः विभूषणं.

दनेनस्यंदनेननिर्गत्याविलंघितदूरवियत्पथः पाथोनिधौगंभीरनरिपूरराक्षितरक्षः कुलकोलाहलनीचीकृतवीचिरवरसातलकुहर
मुखंनिरुध्यरणप्रस्तावांवितस्तरे ॥ तावदनाकर्णितपूर्वगांडीवविस्फारश्रवणादहंपूर्विकयायुगपदभिषेणयतोदिविषदवध्यभा
वादध्यातमरणान्क्षिप्रैः क्षुरप्रैर्विश्राणिताविवरादुरसः कृतप्रयाणैः प्राणैस्त्रिकोटिशोनिवातकवचानपिप्रवातकवचानेवाविरच
य्यानिवर्त्तमानोयंनभसः प्रमादादापतितेनपतंगपरिवेषेणेवस्फटिकप्राकारेणपरिगुप्तिमतोहिरण्यपुराद्विदितबंधुजनवृत्तांततयारो
षादभिगम्यकळहायमानान्कालकेयानपिकालगेहातिथीन्प्रथमंपाशुपतेनमंत्रपूर्वंनिमंत्रयांचक्रे ॥ पद्यं ॥ अवायुनेयाः शरदभ्र
पंक्तीरविद्यमानास्तमयाश्चताराः ॥ दैतेयसंहारभवाः सजिष्णुर्दिविप्रतिष्ठापयतिस्मकीर्तीः ॥ १२ ॥ हतरिपुंविनिवृत्तमवेक्ष्यतंहारि
हयस्यसुरैः सहतुष्यतः ॥ नयनवारिभिरंगमनाप्लुतंनददृशेतिलमात्रमपिस्वकं ॥ १३ ॥ पुरिवज्रिणः सुरनुतिप्रसरत्पुलकावमग्नभु

१ अभिषेणयतः अरौसेनयासह अभिगमनं कुर्वतः २ क्षिप्रैः वेगवाद्भिः ३ निवात कवचान् वातरहितं कवचान् शस्त्राभेद्य कवचान्वा पक्षे निवातक
वचाख्यान् ४ प्रवात कवचान् प्रकृष्टः वातः वायुः कवचेयेषांतान्.

र्व्यहर्षविकसमन्म्सोमघोनः ॥ अंगेऽखिलेप्रसरतांपुलकांकुराणामक्ष्णांसहस्रतयमेवबभूवविघ्नः ॥ ५ ॥ आज्ञयापितुरमर्त्यसमा
सादभ्रतः स्वनितमंगलवाद्यं ॥ वारणेंद्रमधिरोप्यजयंतोवैजयंतमनयद्विजयंतं ॥ ६ ॥ आनतस्यपदयोरथजिष्णोराशिषोनुपदमिं
द्रपुरंध्री ॥ पारिजातकुसुमस्यपरागैः फालसीमनिललामचकार ॥ ७ ॥ पुनः पुनस्तंत्रपुलोमपुत्र्याजयंतशंकांददतः स्वकां
त्या ॥ नरस्यमौर्वीकिणएवदोष्णोर्नामग्रहेपुस्खलनंन्यरौत्सीत् ॥ ८ ॥ पितुरिवास्त्रकलांदिविगायकात्पिककुलादतकंठरवो
दयः ॥ परित्द्दतामृतादिव्यजनावृतः परिशिशीलसगीतकलामपि ॥ ९ ॥ तमुर्वशीतत्रकदाचिदेत्यस्वयंरहः कर्मणिभग्नकामा ॥
अयेपृथापत्यतवाभिधेवक्लीबत्वमेहीतिशशापकोपात् ॥ १० ॥ तद्बुध्वाहरिरूचेतंशापोयंवत्सतेमुदे ॥ चित्रसेनोकाविद्यायाः
सहेकृत्वाभवोदिति ॥ ११ ॥ गद्यं ॥ कदाचिदस्त्रविद्याशीक्षापरिसमाप्तौसुरसमक्षंगुरुदक्षिणात्वेनविपक्षकुलक्षपणंभिक्षमाणेनस
हस्राक्षेणस्वमस्तकादाक्षिप्यशिरसि निंक्षिप्त किरीटोवलक्षाश्वोयंमात लिप रिक ल्पितरथ्येननंदनवनमंदपवनसंदीयमानकेतनस्पं

१ वैजयंतमित्यप्रसादं २ सहकृत्वा साह्यंकृत्वा.

द्रास्यपेहिनसहेगमनेविलंबं ॥ क्रोधेभुजामिवममाद्यहिडंबहंतुरुग्यद्द्रदांतवतनूमपिमूढकुर्यात् ॥ १९ ॥ इत्थंगिराकिंचिदुदीर्य
तस्यलांगूलमात्रेतरलः कपींद्रः ॥ कोपारुणाक्षंकुरुसिंहमेनंस्वापारुणाक्षः स्वयमेवमूचे ॥ २० ॥ भद्रस्वस्त्यस्तुभ्यंचिरमिहज
रसानिद्रयाप्यातुरोहंप्रत्युत्थानादिकर्मण्यपटुरवयवैरस्मितस्मात्त्वमेव ॥ जात्यावस्थानरीत्यापिचविपिनपथेप्राप्ततिर्यक्त्वमेवंवा
लाग्रेमांविकृष्यद्रुतमभिलषितप्राप्तयेसाधयेति ॥ २१ ॥ इत्युक्तएषपरिघंधरणौनिधायवल्कंदृढंचपरिधायभुजार्गलाभ्यां ॥ तंकृष्टु
मेवनशशाकसतुप्लवंगोवालस्थयाघनतयास्यमनश्चकर्ष ॥ २२ ॥ गद्यं ॥ तदनुविनयविस्मयव्रीडापारदृश्वनामातरिश्वसूनुना
त्वंवासवलोकवासिषुकोसीतिपृष्टः कपिकुंजरः स्वमंजनायांप्रभंजनेनसंजनितंजानकीजानेर्हृदयरंजकंलेखवाहंव्याजहार ॥
सबहुमानंतस्यवचनमाकर्ण्य ॥ प्रीतेनतेनपुनरप्याधिपः कपीनामूचेतथायदिभवानघुनार्थयेहं ॥ कर्त्तुंतनुंनयनयोः पथितावकी
नांतत्तादृशीमुदधिपल्वलतासवित्रीं ॥ २३ ॥ इत्युक्तोयंप्रवृद्धोंगैर्हेलयारुरुधेनिजैः ॥ वैमात्रेयस्यतस्यैवमार्गंदिविषदामपि

१ उद्यद्गदां उद्यंतीगदा यस्यांसा पक्षे उद्यन् गदः रोगः यस्यांसा. २ तिर्यक्त्वं पशुत्वं वक्रत्वंच ३ तावकीनां त्वत्संबंधिनीं.

जचापकिणः ॥ मनसेसपंचशरदोप्सरसांवसतिस्मपंचशरदोविजयः ॥ १४ ॥ तस्यवृत्तमधिगम्यलोमशाद्धर्मजोपिमुदितः सहा
नुजैः ॥ प्राप्ततीर्थमुनिसेवनः क्रमांत्पावनंबदरिकावनंययौ ॥ १५ ॥ तत्रब्रह्मपरायणैर्मुनिजनैः संसेव्यमानांतिकौसध्र्यंच्चौयमिनौ
निरीक्ष्यसनरंनारायणंचाख्यया ॥ अंगेनानिशमांतरेणमहतीमेकांक्षमांसंस्पृशन्बाह्यैरष्टभिरंगकैरपिपरांपस्पर्शपार्थः क्षमां ॥ १६ ॥
विलोकनैर्विश्रमशाखिभिस्तयोर्भवाध्वगानांपरिधूनितश्रमः ॥ निवासमालंब्यतपोवनेतदाविवामदुःखाद्विररामपार्थिवः ॥ १७ ॥
॥ गद्यं ॥ एकदातत्रस्नुषावत्सलतयेवमारुतेनपुरतोनीतंमसौसाहिमटवपिर्यटनखेदसंपदामंधंकरणमालिकुलचेतसामासेचनकम
र्णांकमपिकल्हारमुकुलमादायक्कलभ्येतपुनरेतादृशमितिकुतुकहर्षाभ्यांसूचिततर्षयापार्षत्यारहसियाचितः पार्षदश्विः क्षणंविचिं
त्यतद्विचिचीषयादिशमुदीचींप्रतस्थे ॥ पद्यं ॥ क्षिप्रंविलंघ्यगिरिशैवलिनीवनानिगच्छन्नसौपथिददर्शकपिंमहांतं ॥ दृग्भ्यामवंत
मरिपत्तनदाहकालेनिद्रांभयादुपनतामिवकुंभकर्णात् ॥ १८ ॥ अभीरसौगभीरमभाणीच्च ॥ कस्त्वंनिरुध्यपदवीमविनीतबुद्धोनि

१ पंचशरदः कामदः २ शरदः वर्षाणि ३ सध्यञ्चौसहगच्छंतौ ४ क्षमां शांतिं पृथ्वींच ५ असासहि असहमानं ६ आसेचनकं अतिसंतोषदायकं.
७ अरिपत्तनं शत्रुपुरं लंका.

न्यलावीत् ॥ ३२ ॥ गद्यं ॥ तदात्वएवतद्राक्षिणः कस्त्वंसाहासिन्नायुरग्रभूमिमारुह्यरक्षसीतिसमंततोनिरुंधानानन्वयंतावलंबकतयालोहितानांलोचनानांप्रतिबिंबैस्तांसरसींपुनरपिसौगंधिकांतर्वर्त्नीमिवकुर्वतः क्रोधवशान्नामयातुधानान्सभीमोरंहसासमुपबृंहितासिंहनादाश्चिरतरमुपोषितस्यपारिघस्यपारणांपरिकल्पयांचक्रे ॥ पद्यं ॥ रक्षः सृतारक्तनदीमहाद्रेर्विष्ककपपंतीावियातिस्थितानां ॥ शरत्त्वटीधातुझरीतिबुद्धेः करावलंबंकलयांचकार ॥ ३३ पर्वतस्याग्रवस्तुभ्यः प्रवेस्तुंनेच्छतीदृशं ॥ उत्खायसमहायत्नादुपासदिदुपत्यकां ॥ ३४ ॥ गद्यं ॥ तदानीमितरेष्वपिभ्रातृपुकमलपालिकासूनोः स्कंधभागाशिबिकामाधिरुह्यतस्यैवकटकमागतेषुसत्सुमारुतिरादरेणरहासिविकासितांकुसुमसंहतिंमूर्त्तानुरागभ्रमदांप्रमदां प्रत्युपदामकरोत् ॥ पद्यं ॥ सरसीवकचेप्यस्याधार्तराष्ट्रकुलीकृते ॥ ऊर्षेतयावरतनोरूर्मिमत्यालिभासुरे ॥ ३५ ॥ इतिसौगंधिकाहरणं ॥ गद्यं ॥ अथकदाचिदाखेटायतटाटवी

१ सौगंधिकं सुगंधिरक्तकमलं २ प्रवस्तुं निर्गंतुं ३ धार्तराष्ट्र· हंसः दुःशासनश्च ४ ऊर्मिमति वीचीयुक्ते वेकेच ५ अलिभासुरे अलिभिः भासुरं आलिवधूभासुरंच अथवा रलयोरभेदात् अरीणां भाकांतिः असवः प्राणाश्चतानूराति गृण्हाति द्रौपदी केशाकर्षण मेव कौरवनाशहेतुरितिभावः ६ आखेटाय मृगयायै.

॥ २४ ॥ त्रस्तस्यतद्वपुरुदीक्ष्यसजातिशंकिमैनाकसंशयकुठारितपक्षलोपं ॥ मोहेययानयनयोर्मुकुलीबभूवबोधेतथैवकरयोरपियु
ग्ममस्य ॥ २५ ॥ प्रमोदात्परिपुष्यद्भिः प्रतिक्षणमथांगकैः ॥ भीमेनाप्युदघाटीवभ्रातुर्वृद्धिविडंबना ॥ २६ ॥ सविनयमेवंव्याजि
ज्ञपच्च ॥ प्रार्थ्यमानपददर्शनांचिरात्पश्यतः पथिभवंतमग्रजं ॥ विस्मयांबुनिधिरेषमेधुनावीरवर्यभवताप्लिवुस्तरः ॥ २७ ॥ राम
वस्यसहजादपित्वयिप्रेमवृत्तिरधिकेतिमेमतिः ॥ यामिनीचरवधोत्सवेयतोलक्ष्मणादधिकमंशमग्रहीः ॥ २८ ॥ आर्यक्षमस्वमम
वागपराधमुग्रमित्यानतंचरणयोश्चिबुकेगृहीत्वा ॥ जिघ्रन्शिरस्यवरजंमुमुचेहनूमान्भीमोप्यमुष्यविरहासहनोश्रुबिंदून् ॥ २९ ॥
गच्छतोस्यपथिमारुतेः पुरोगंधमादनमभूत्कुलाचलः ॥ वानरेंद्रइवगाढवीक्षिकावासनाभिरविमुक्तदृक्पथः ॥ ३० ॥ अलेकेश
योषिदलकेशयैः सुमैः मुरभिप्रमोदसुरभिंनभः सदां ॥ शिखरेसतस्यमहतीमुदग्दिशोमणिदर्पणीमिवददर्शकापिकां ॥ ३१ ॥
यक्षाधिपस्ययशसीवगृहीतदेहेदृष्ट्वाभयादपगतेसतिहंसयूथे ॥ कक्षानिवेशितगदः सविगाह्यतोयंफुल्लानिहककुलान्यखिला

१ सजातिशंकिमैनाकः अयंमेसजातिः इतिशंकमानः मैनाकः २ अलकेशः अलकायाः कुबेरपुर्याः ईशाः कुबेरः ३ सुरभिंकामधेनुं दासी मित्यर्थः

सर्वानिहतेस्मिन्वनावनिः ॥ उत्कंटकाभवत्प्रीतिरुन्नत्यासातुपार्षती ॥ ४१ ॥ ततस्तेश्वेताद्रिंचिरमधिवसंतः कुरुवराः सिता
श्वस्यप्रास्यामुदमनुबभूवुर्निरवधि ॥ कथाशेषीकारास्त्रिदशरिपुवर्गस्यबहुधाधनुर्भ्रंशोज्झत्वंशतमखभुजेस्थापितवतः ॥ ४२ ॥
तमनुक्रमभाषितेशयुद्धंसबहूकृत्यचलाचलेनमूर्ध्ना ॥ नृपतिः सहजैः सममहाद्रेर्न्यवृतद्द्वैतवनंनितांतहृष्टः ॥ ४३ ॥ नरेंद्रपुत्राः
सहथाग्रसेन्यानकेवलंतप्ततपोधनानां ॥ नेत्राणिजन्हुर्नियमैः कृशांगानेदीयसीनांवनवीरुधांच ॥ ४४ ॥ तदनुसखलुमानीसर्व
साम्राज्यलक्ष्मीप्रविकटयिषुरेषांप्राप्तकार्श्योन्नतीनां ॥ कुरुनृपतितनूजोघोषयात्रापदेशादभजतबलसंघैरावृतस्तंवनांतं ॥ ४५ ॥
कर्णानिलैस्तत्रकथिज्जनानांचलत्सुसर्वेषुचमूरजस्सु ॥ रजस्तुचित्ताश्रितमस्यराज्ञोबलादिवाचंचलमेवतस्थौ ॥ ४६ ॥ तत्ररज्जुन
हनस्यभाविनःस्थानसूचनकृताइवांगदे ॥ धारयन्भुजयुगेनकौरवः सैनिकान्साविबभाजपंक्तिशः ॥ ४७ ॥ अभ्रंलिहस्यवटभूमिरु
हस्तलेसौस्थित्वाशृणोत्तदनुवैणिकगीतिरीतिं ॥ संगीतभंगिरसिकंसहबंधुवर्गैराकारयन्निवसुराधिपगायकेंद्रं ॥ ४८ ॥ गद्यं ॥

१ उत्कंटका अङ्कुरोमांचा २ धनुर्भ्रंशोज्झत्वं धनुर्वेदत्यागं अशत्यभावात् हरेण धनुस्त्यक्तं ३ नेत्राणि नयनानि वस्त्राणिच. ४ रजः रजोगुणः.

मटतितस्मिन्बकाद्विषिजटोनामदुर्जटः सुरारिरुटजमुपेत्यवेदिकयावैतानतनूनपातइवदायितयासहत्रीनपितान्वीरान्स्कंधमानीय
जवात्केनाप्विदपादिशपथेनप्रतस्थे ॥ पद्यं ॥ गतागतेतत्रघटोत्कचेनजटेनचस्कंधधृतस्यराज्ञः ॥ पादार्पणालाभशुचावनंतत्पतत्रि
नादैरिवरोदितिस्म ॥ ३६ ॥ वनंयियासोः कठिनेसभांतेजटासुरोधोनबभूवयस्य ॥ वनेविजृंभत्करुणेतुतस्यजटासुरोऽधोजानि
धर्मसूनोः ॥ ३७ ॥ नीत्वाकिमद्यवनसीमनिदूरमेतानत्रैवहन्मिसहसेतिधियैवतिष्ठन् ॥ आलक्ष्यतायममरारिरनुष्णजंघोगंतुंप
दात्पदमपिक्षितिपानुभावात् ॥ ३८ ॥ मध्येमार्गवनांतान्मदगजगमनेमारुतौसंमुखोस्मिन्सार्धतेनाथयोद्धुंधृतरभसमनास्तीव्रदर्प
प्रसारः ॥ दैत्यस्तान्राजपुत्रान्क्षितितलमनयद्बाहुनास्कंधमध्यात्क्रोधांधोऽरत्निमीम्नासपुनरनिलभूर्दारुणंतस्यशीर्षं ॥ ३९ ॥
निपेतुषस्तस्यनिकृत्तमूर्ध्नोनितांतभारेणवनांतभूमिः ॥ निम्नाभवद्दूरमुष्यसंगेनिजैः प्रतीकैरिवसंकुचंती ॥ ४० ॥ निष्कंटकाभव

१ जटासुरोधः जटासुरोधः प्रतिबंधः २ विजृंभत्करुणे विजृंभंती विकसंती करुणा यस्मिन् पक्षे करुणाः वृक्ष विशेषाः ३ जटासुरोधः जटासुरः अधः.
४ निष्कंटका शत्रुरहिता.

 

भार्बनजहुर्मुखानि ॥ ५३ ॥ तस्यांतः पुरुसुभ्रुवोविगलितैर्वाष्पांबुभिः पंकिलेमार्गैर्मंदिनवेगपादगतयोवक्षः स्खलत्पाणयः ॥
आजग्मुस्तमजातशत्रुमजहत्कारुण्यमंघ्रिद्वयेकुर्वत्योनामितांघ्रियैवपुरतोदत्ताईसाह्यांशिरः ॥ ५४ ॥ सगद्गदमेवमभिदधुश्च ॥ संद्र
५० ष्टुंतवपादमूलमधुनासर्वैः समंबंधुभिर्देवभ्रातरमागतंवनतलेलेशनेहेतोर्विना ॥ पापः कश्चनगायकोदिविषदांहाहंतबध्वादृढं
नि: शंकैरुपर्वाणितोनिजभटैरभ्रंनयत्युच्चकैः ॥ ५५ ॥ तदद्यनः कंठभुविस्नुषाणांतवैवपादंशरणंगतानां ॥ वास्तव्यतामंगल
सूत्रिकायाः प्रसीददातुंप्रथमानकीर्ते ॥ ५६ ॥ गद्यं ॥ इतिताभिर्दीनभावंपुरोधायनिवेदितस्यगाज्ञोनिदेशेनानिर्गत्यसत्वरमनुधाव
तांभ्रूदंड मिवकोदंडम पिकोपेनकु टिलीकुर्वतांभीमप्रभृतीनांश्वे लिनविस्फाराभ्यांतत्क्षणं वियदखिलंविकस्वरानिजगुणमासीत् ॥
॥ पद्यं ॥ कगायकायूयमुपात्तवीणाः कचापधुर्याः कुरुवंशभूपाः ॥ अहोरणेचापलमीदृशंवः स्वमूलकंवापरमूलकंवा ॥ ५७ ॥ ५०
वृषांकमौलेर्व्रणचिन्हदार्यीवने ऽर्जुनोस्मिन्वसतीतिवार्त्ता ॥ पपानकर्णेभवतांनकिंचिद्यदीदृशंसाहसमातनुध्वे ॥ ५८ ॥ भ्राताधु

१ उपवीणयितुः वीणयागीतः.

तावदस्यभार्तराष्ट्रस्यचेष्टितरीत्यंनिरीक्ष्यनितरांधांधः सुधांधः पतिनिदेशेनवनात्वनिदेशेऽवतीर्णविधृतकृपाणबाणचापकलापतनुत्रसेनाभिरसेनाभिरक्षुधितस्तरक्षुश्चमूरुतातिमिवचमूममूंनिवार्यक्ष्वेडयालोलयांचक्रे ॥ पद्यं ॥ भटेपुधावत्सुभयेनकर्णः क्रुधाहसन्कुंजरमंजुचारः ॥ करेणविस्फारितकालपृष्ठोजगामशत्रुंजगदेकवीरः ॥ ४९ ॥ स्वसमाननान्यवयवेनटङ्कुणाद्धनुषश्च्युतैः सपदिदेवगायिनां ॥ अतिरक्ततांगलतलैफवर्तिनीमखिलेवपुष्यपिचकारसायकैः ॥ ५० ॥ गगनेशिरश्चलयतः श्रवोचलाद्गलितापिदूरमवतंसमंजरी ॥ पुनरुन्नमद्भिरिषुपक्षवायुभिः पुरतोभवत्कलहजीविनोमुनेः ॥ ५१ ॥ हस्तैः प्रवीणैरखिलेपिकर्णेसुधांविमुंचन्सुरगायिवर्गः ॥ अयुक्तमेतत्पुनरत्रकर्णेविषाक्तवर्गंविससर्जघोरं ॥ ५२ ॥ गद्यं ॥ तदनुविश्वातिशायिनोविश्वावसुकुमारस्यशरगणेनसहजवक्त्रतेकृतपणबंधइवधावतिराधेयेक्रंदत्सुकुरुवृंदेषुसर्वेपिगर्वेणगंधर्वभटाः सुयोधनमायोधनधरणिमध्यभाजंरज्जुभिरवबध्यगर्जतोरभसवजौनिर्जरपथमनैषुः ॥ पद्यं ॥ नयत्स्वमुंवैरिषुनाकमार्गंविषादभाजांविपिनेकुरूणां ॥ तत्तादृशेव्रीडभरेपिनेषामुत्तान

१ सुधांधःपतिः इंद्रः २ कालपृष्ठं कर्णधनुष्यं ३ प्रवीणैः कुशलैः अथवा प्रकृष्टावीणायेषुतैः ४ उत्तानभावं ऊर्ध्वंअवस्थानं दुःखेन मुखान्युन्नमय्य मुहुः ऊर्ध्वंनीयमानं सुयोधनमपश्यन्नित्यर्थः.

कालिंकीकुसुमसंकिमिवव्यतानीत् ॥ ६२ ॥ वीरव्रातैस्त्रिभुवनभवैर्विश्रुतेनः कुलेस्मिन्नुद्भूयत्वंबहुभिरनुजैरास्थितोप्याधिपत्यं ॥ एवंभंगंकिमिहभजसेवत्सनीचैः प्रणीतंराजन्यानांपरपरिभवोराजयक्ष्माहिकीर्तेः ॥ ६३ ॥ इत्थांनिगद्यसरलेनयुधिष्ठिरेणबंधाद्विमोच्यवकविद्विषताविसृष्टः ॥ मानंच्युतंमृगयमाणइवातिनम्रोवाचंयमेनसययौमहताबलेन ॥ ६४ ॥ यंप्रायंबहुमिच्छंतिजनाजीवितुमुत्सुकाः ॥ उपाविक्षत्तमेवासौपथिप्राणान्समुज्झितुं ॥ ६५ ॥ तस्मिन्व्रतेस्वपनलब्धमुरारिमाह्यस्त्यागेतनोस्तदनुबंधुतयानिषिद्धः ॥ तस्माद्वनात्पुनरपिप्रतिपद्यधैर्यंघुष्यद्बलोनिववृतेकुराजधानीं ॥ ६६ ॥ तत्रखलु ॥ कदापिमाबंधयगायकैर्मामितविहव्यैरमृतायमानैः ॥ संप्रीणयन्निंद्रमथाभिमानीसपौंडरीकंक्रतुमाजहार ॥ ६७ ॥ भूपोपिनांवनभुवंप्रविहायभेजेभूयः सकाम्यकतपोवनमंडलानि ॥ किर्मीरनाशमुदिताखिलतापसौघस्वाध्यायघोषमुखरीकृतादिङ्मुखानि ॥ ६८ ॥ मृदुभिर्वनवल्लिकंदमूलैर्विहितातिथ्यविधिःप्रतत्रपार्थः ॥ स्थितिमाचगतिस्मतद्दृष्टचेतास्तृणबिंदोर्वचनेतपोवनेच ॥ ६९ ॥ प्रासूतयासदसिपट्टपटीरसंख्याः सैषास

१ राजयक्ष्मा क्षयरोगः २ प्रायंचयः अथवा प्रकृष्टं अयं शुभदैवं पक्षे प्रायोपवेशनं ३ बंधुतया बंधुसमूहेन.

नासीनविसृज्यतेचेत्तथात्रसन्नह्यतुगांडिवोमे ॥ यथामहेंद्रः परिगृह्यवीणांस्ववाहुकीर्तिंस्वयमेवगायेत् ॥ गद्यं ॥ इतिविजयस्य
वीरवादेनपुनरपि निवर्तमानैर्वीणामंसेषु निबध्यबाणासनमेवकूजयद्भिरेतैर्नभश्चरैः सममेषांसकलवैमानिकपरिषदंगरुह वितीर्ण
निद्राभंगोमहान्संगरोभूत् ॥ पद्यं ॥ गंभीरगांडिवगुणाद्दलितैः पृषत्कैर्गंडस्थलेत्द्दादिभुजेगमितव्रणास्ते ॥ गर्वंविहायचकितागग
नांतरालेगंधर्वभावसदृशंगमनंवितेनुः ॥ ५९ ॥ वीणाः समस्ताविजयेनकृत्तागंधर्वसैन्याद्दलिताबभूवुः ॥ आयुष्मतीकेवलमा
लुलोकेहस्ताग्रवीणादिविनारदस्य ॥ ६० ॥ एतावतीतियुधिमार्गणचारशक्तिः स्पष्टीबभूवसुरगायकपांडवानां ॥ तेषांययुः श
रकुलानिहिलक्ष्यमात्रंलक्ष्यंविभिद्यपुनराययुरंतमेषां ॥ ६१ ॥ गद्यं ॥ तत्रशक्रसुतस्यतादृशंविक्रममभिनंद्यकृतसंधानेनगंधर्वरा
जेनसमर्पितंपौरुषहीनमिदंनपुरस्करणीयमितिबंधमिषेणपश्चादुपनीतबाहुयुगुलंसुयोधनमादायतेभीमादयोवसुधाधिपस्यसंन्नि
धिमधिरोपयामासुः ॥ पद्यं ॥ तंवक्ष्यितत्रतरुमावरणंभजंतीसापार्षतीसविधवल्लिपरंपरासु ॥ हासैः करांगुलिबिलादसकृद्गलद्भिरा

१ गंधर्वभावः अश्वत्वं.

गिनद्गुतमम्बदुदुवतां ॥ ततः क्षणादेवकर्णपूरकुसुमसौरभजिघ्रत्सिजिनीकेनधनंजयेनसंपत्राकृतोधृतत्रासतयाविद्यामिवाविनय
विपर्ययः कृष्णांविमुच्यकृतपलायनः सदुर्मेधाः पुरः प्रधावितेनमागधविरोधिनारुरुधे ॥ पद्यं ॥ कचेगृहीत्वाभुविपातितस्यक
ठोरचारित्रपरस्यशत्रोः ॥ संताडनेमाहतिरात्मपाणेः मच्छात्रयामासपदंचवामं ॥ ७३ ॥ सौवीरभर्त्तुरथमूर्द्धनिपंचचूडाः कृप्ताः
क्षुरेणपवनात्मभुवाविरेजुः ॥ इंगालधूमकलिकाइवशाम्यतोंतस्त्रासांबुभिः स्मरशरानलपंचकस्य ॥ ७४ ॥ विमतमनुजनीतंवी
क्ष्यभूपः स्मितास्यः कृतनतिशिरसंतंकेशभारेल्हितेपि ॥ त्वदसुहरणमार्गेदुः शलैवार्गलानः क्वचिदपिकुरुमैवंकुत्सितेत्युत्सस
र्ज ॥ ७५ ॥ दीनधीः सतपसाहिमशैलेदृक्पथंपुरहराद्गृहयालोः ॥ आददेवरमथोविंजयौद्वावंतरेणयुधिपांडवरोधं ॥ ७६ ॥ पार्था
श्वकृच्छ्रादुत्तीर्णापार्षतींप्राप्यरेमिरे ॥ हेमंतात्पद्मिनीमुक्ताहेलेौरविकरांकुराः ॥ ७७ ॥ अत्रांतरेज्वलितवर्णवपुः कदाचिदंगेपुश

१ सपत्राकृतः अतिव्यथितः २ विनय विपर्ययः अविनयः औद्धत्यं ३ अर्गला विघ्नइत्यर्थः ४ विजयौ अर्जुनो जयश्च ५ हेलेः सूर्यस्य ६ अंगेषु
अवयवेषु देशविशेषेषु च.

भागमर्षीतिस्मकौतुकाश्च्यः ॥ वेणीधरामुटजसीमनियाज्ञसेनीं विस्मित्यवल्कलवसं ददृशुर्गृहिण्यः ॥ ७० ॥ तत्तादृक्षेकरेस्याद्विविध वनभवकंदमूलोपहारं दातुं लज्जापयोधेस्तलमभिममृशुर्धर्मदारामुनीनां ॥ यस्यस्पर्शानुभावादविरतमुदितैः पायसैरेवादिव्यैः किंचिद्राडंवमातेतनुमतिथिजनस्यातनोदन्यथार्या ॥ ७१ ॥ दिशिदिशिमृगयायैतेषुयातेषुजातुस्वयमुटजमवाप्तः सोमकेंद्रस्य पुण्याः ॥ लपनशशिमहिम्नालंघयामासवेलांतरलितमकरांकस्तत्क्षणांसिंधुराजः ॥ ७२ ॥ गद्यं ॥ ततः क्रंदंतींकुररीमिवरुदती मेनांपुरस्तादधिरोप्यसूतकरतोत्रदंडाध्यापितवेगतंत्रपारिणरथ्येनघनतरतज्जघनपयोधरभाराक्रमणाविनम्रीभूतपूर्वभागतयापार्थदर्शनशंकया निकुब्जीभूयेवधावताशतांगेननि मिषचूषितपरिणाहवनीपथंजयद्रथंपुनरप्याश्रमपदमाश्रित्य निशमितप्रमदावार्त्तेन चार्त्तेनेवपूर्वजेन नियुक्तौजटारिकिरीटिनौरोषविद्रुमलताकिसलयैरिवलोचनैः शरासनमवकीर्यमृगयाविहारानिवृत्तमात्रेणचर

१ अन्यथार्या वधुरित्यस्य अन्यथार्थः अवगुण्य वहती २ लपनं मुखं ३ वेलां मर्यादां कूलंच ४ मकरांकः कामः पक्षे मकरा एव अंकः भूषणं ५ सिंधुराजः [illegible] समुद्रश्च.

तंगुणगणैरपरैरयशास्विनंनजगदाद्रियते ॥ ८६ ॥ व्यापृताविंतरणोपनिषत्सुव्याहरंनिहिविपाश्चिदर्थीशाः ॥ स्पर्शनेनरहिताविं
तिहैतौलुब्धकंचकुणपंचसमानौ ॥८७ ॥ दृष्टेवनीपकजनेवदनंस्मितेनदानांबुनाकरतलंयशसादिशश्च ॥ शुभ्रीकरोतिविवशः
स्वयमेवदाताकस्तादृशंप्रातिनिवर्त्तायितुंक्षमेत ॥ ८८ ॥ वांछामनाप्तेनवनीपकेनसहासवोदातृजनस्ययांति ॥ नदद्यशाक्रार्चन
याधृतासौभीविवघोमेपरमोहिलाभः ॥ ८९ ॥ यद्गेहप्रतिहारभूतलशिलाचिंतामणिः कल्पकायस्यारामहीरुहश्चसुरभिः साहो
मधेनुः पुनः ॥ तादृग्याचतिचेदुपेत्यमघवासंपूर्यतत्कामनां त्रैलोक्यस्थवदान्यमंसदुपरिस्यामेषमेनिश्चयः ॥ ९० ॥ वीक्ष्यवंध्यव
चनोपिगुणज्ञोविस्मयांबुनिधिवीचिषुमग्नः ॥ पद्मबंधुरितिवादिनमेनंपाटलस्मितरुचिर्गिरमूचे ॥ ९१ ॥ गद्यं ॥ अयेवत्सभव
ताभाषितंक्षममेवस्थूललक्ष्याणामीदृशंतवमतंपुनरपिममरसनांनिदेशावशेषपथपाथिनींनिर्मिमीते ॥ अथवात्वंशुनाशीरस्यम
नीषितस्यप्रपूरणात्प्रागेवपूर्वदेवगर्वनिर्वापणधूर्वहतयाकुलिशमपिचिरारूढकलंकाकुलंजर्जरितधाराशतमातन्वतानदीयांशक्ति

१ वितरणंदानं २ स्पर्शनेन दानेन स्पर्शेनच ३ स्थूललक्ष्याणां दानशौंडानां.



५१

न्दइवकर्णमवाप्यरात्रौ ॥ भासांनिधिः कृतनमस्करणायतस्मैप्रेम्णाशिषः प्रणिजगादयवीयसींगां ॥ ७८ ॥ अहमहरधिनाथो
ऽनुमहान्मैपृथायामयिजननमगास्त्वंवत्सकोशोगुणानां ॥ नादिदमिहरहस्यंशासनंगृह्यनांमेतनयकुशलयोगेतातपादायतंते ॥७९॥
मुखसंधानविश्लेषमुक्तेकवचकुंडले ॥ तवैतेभूषणेशोभांतन्वातेपरदुर्लभां ॥ ८० ॥ एतानियाचितुमिहद्विजवेषगूढंमालब्धकाममम
राधिपतिंकथास्त्वं ॥ आज्ञापथात्स्खलसिचेदणुमात्रमस्माद्वध्योभविष्यसिमुखेनरणेरिपूणां ॥ ८१ ॥ इत्थंनिशम्यतां वाचंराधे
योरचितास्मितः ॥ हर्षादंजलिनासाकमाददेप्रतिभाषितं ॥ ८२ ॥ नवार्यमेनिप्रार्थनेपिशब्देममार्यमेत्यार्थिजनेषुदानं ॥ निषेधरू
पेनिदधातिमार्गेपदंकथंवाभवदीयजिव्हा ॥ ८३ ॥ सततंसदर्थिसदसेबहुदातुंसकुतूहलस्यपुरुषस्यजगत्यां ॥ उदकोर्मिकाकरधृ
ताहिविभूषाकनकोर्मिकातुपरमंगुलिभारः ॥ ८४ ॥ दिवमेशयः खलुशयैः प्रतिकर्तुंधृतलालसोभवतिनार्थिषुदैन्यं ॥ प्रतिपाद
येत्सतुकथंपुरुषस्यप्रातिलोमवर्णनिजनामपदार्थं ॥ ८५ ॥ यशएवजन्मफलमात्मवतामिदमोषितव्यमतियत्नभरात् ॥ अपिभूषि

१ कुशलयोगे लब्धस्य परिपालनं अप्राप्तस्य प्रापणंच तयोः समाहारः तस्मिन् २ यः खलुददाति सोर्यमा ३ ऊर्मिका लहरी अंगुलीयकंच ४ शयः
हस्तः ५ प्रतिलोम विपरीतं.

 



धनमपल्हत्यहरिणोयमितस्ततोधावतीतिबाष्पायमाणस्यकस्यचिद्गृहमेधिनः शोकनिवारणायचक्रीकृत्यचापमनुधावतस्तान्पा
र्श्वलतताडनानुषक्तनवकिसलयजालमुत्प्लुत्यधावनवेगपवनबहिर्ज्वलितगर्भवन्हिशिखाकंदलमिवाराणिविषाणयोर्बिभ्राणः क
तिषुचित्पदेषुसुग्रहइवकतिषुचिद्दुरासदइवचित्रगतिः कोपिकृष्णसारोदूरमाकृष्यस्वयमंतरधात् ॥ तदनंतरंललाटंतपनरवंपचहे
लिधूलिभ्यां द्यावापृथिवीभ्यामुदन्यावदान्यमहिमनि[1]दिनयौवनेप्रकृतमर्थ[2]मिवपानीयमपिइतस्ततोविचिन्वद्भिरनुजैः सहकस्य
चिद्विशालस्यवनशालस्यमूलमुवंतच्छायमंडलमिवपांडवः शनैः शनैरुपससर्प ॥ पद्यं ॥ तत्रानिलैः कमलगंधिभिरुच्यमाना
माशांगतेषुसलिलायचिरायितेषु ॥ भीमादिषुक्षितिभुजापरितप्यभेजेतेषांपदानुसरणादथकापिवापी ॥ ९८ ॥ तस्यास्तटेकम
लिनीदलपत्रपाणीस्तान्पंक्तिशोनिपतिनानवलोक्यवीरान् ॥ बाष्पांबुभिः प्रथमदर्शितमार्गएवतन्वानृपस्यधरणीसहसानिपेते
॥ ९९ ॥ सनृपतिर्ददृशेऽधिकवत्सलः सपदिमूर्छितधीर्निभृतांगकः[3] ॥ स्वयमपिप्रविभर्ज्यतदादशामनुभवन्निवतामनुजाश्रितां



१ उदन्यावदान्यमहिमनि उदन्यापिपासा वस्याः दातामहिमायस्यतस्मिन् २ प्रकृतं प्रस्तुतं अर्थं हरिणं ३ निभृतानि गडाानि.

माधत्स्वेति ॥ ततस्तथेतिपरमंगीकृत्यपश्यतस्तनूजस्यसमक्षमचिरेणसमरीचिमालीचरमाचलशिखरपरिशील्यमानविहारमिहा
पिसमाचचार ॥ पद्यं ॥ कतिपयदिनेकालेयातेततोमरुतांपतिः सदसितनयंभानोरित्यार्थीचाटुशताकुले ॥ कवचमतुलंवाचाया
चत्सकुंडलमादरादयमपितयेत्युत्काशाक्तिंतनोजगृहेद्भुतां ॥ ९२ ॥ नकारमेतेवहतोरिपूममेत्यमर्षभारादिवशस्त्रधारया ॥ सुतोर
वेर्दंशनकर्णवेष्टनेस्वयंसमुत्कृत्यददौबिडौजसे ॥ ९३ ॥ निशम्यतत्कल्पनरोम्हियाच्युतैश्चिराजितैस्त्यागयशोभरैरिव ॥ सुपर्वमु
कैः कुसुमैर्नकेवलंनदंगमंगाश्चसुगंधयोभवन् ॥ ९४ ॥ जाग्रत्सुसर्वावयवेषुतस्यकर्णस्यकर्णः पुनरर्थिनेस्वां ॥ हिरण्मयींयद्विन
तारभूषांतन्नामसाम्यंध्रुवमत्रहेतुः ॥ ९५ ॥ आपृछ्यतंतदनुनाकपतिः सुधर्मामासाद्यामिद्धमरुदप्सरसांसमाजे ॥ प्राशंसदस्यच
रितंसविधेसुरभ्यारोमंथमप्याविगणय्यनिशम्यमानं ॥ ९६ ॥ तावत्पार्थास्तेपिपुनः काम्यकसीमांहित्वासंघैर्भूविबुधानामनुयाताः ॥
तीर्थव्रातान्विस्मृतपूर्वानवगाढुंवध्वासार्द्धंद्वैतवनारण्यमवापुः ॥ ९७ ॥ गद्यं ॥ तत्रकदाचिदाश्रमद्वारिहामहामागाममहोमसा

१ अंतर्धानमित्यर्थः २ दंशनं कवचं ३ कर्णवेष्टनं कुंडलं.

प्यसूनिहविमुंचतियाज्ञसेनीसाश्वापदामिषमबुद्धगतिर्भवेन्नः ॥ हामाद्रिकुंतियुवयोर्वनभूमिरेवपुत्रप्रसूतिविपदोः पदतांप्रपेदे



॥ १०६ ॥ कूटस्थशीतकरकुक्षिगनंकुरंगंकुर्वन्स्वजातिकृतकोपरसातिरेकं ॥ कोदंडमप्यगणयन्कुलिशास्त्रसूनोः क्वासौस्थितोव



नमृगः कुलहानयेनः ॥ १०७ ॥ इत्थंविलप्यनृपतौस्वयमप्यमर्षामंतस्यहेतुरिदामित्युदकंसरस्याः ॥ पातुंप्रवृत्तवतिकोपिपुमान

दृश्योगंभीरमाहगगनास्थितएववाचं ॥ १०८ ॥ राजन्मदुक्तिसरणेः प्रतिवाक्यदानंदेवोप्युपेक्ष्यजलमत्रनपातुमीष्टे ॥ एतेंमदीय

मवमत्यवचोवलेपात्पीतांभसः सपदिबिभ्रतिदीर्घनिद्रां ॥ १०९ ॥ नत्प्रत्युदीर्यसलिलंतुपिबेतिवक्तुः प्रश्नानसीदिविचरस्यपटू

परैः स्वैः ॥ प्रत्युद्ययौबहुमतैर्वनदेवतानामिंदोः करानिवतरंगकुलैः पयोधिः ॥ ११० ॥ तदनंतरं ॥ कटिलंबितवल्कलोजटालः

कमनीयस्मितधौतयज्ञसूत्रः ॥ कुशबर्हवतंसितः सदेवः कुरुराजस्यपुरोऽवतीर्यतस्थौ ॥ १११ ॥ गद्यं ॥ सतुतत्रलोकातीतेन



राकाशतामित्राकारयतानिजेनतेजसाकुड्मलीकृतकरकमलयुग्मंतमात्मसंभवंप्रेममेदुरमेवमवादीत् ॥ अयेवत्सममांधर्ममवेहि ॥

१ बर्हे पर्ण २ भामतारपवा आम्हयत्ता.

॥ १०० ॥ नासाविलोभनपटून्नवपुष्पगंधानादायतत्रमधुपैरनुसेव्यमानाः ॥ वर्द्धिष्णुचेतनमिमंनववापिकायाः कल्लोलमल्लपवनाः कलयांबभूवुः ॥ १०१ ॥ गद्यं ॥ ततः क्षणादेवकिंचिदुद्भ्रम्यपरितः शून्यशून्यादिशोदशापिविलोकयमानः शनैः शनैरुपसृत्यशोकचंचलेनकरांचलेनतान्पर्यायवृत्यापरिमृश्यवन विहगमृगपानसौ कर्यायदुरवतरांतांसरसींपरिपूरयितुमिवबाष्पधाराममभिवर्षन्धर्मसूनुरेवंविलपितुमारभत ॥ पद्यं ॥ वीराभवद्भिपदिदेवपरंपरापिदूरापरान्प्रतिनरान्नागिरांप्रवृत्तिः ॥ हाहादशेयमिहवोयकुतोवतीर्णाम्नामंतरेणकिमिदंभवतांप्रयाणं ॥ १०२ ॥ दैवंकठोरचरितंदययाविहीनंमाद्रीसुतावहहमातृमुखानभिज्ञौ ॥ कंदांकुराणिचफलानिचभक्षयित्वाकांतारसीमानिमयाचरितुंनसेहे ॥ १०३ ॥ स्वयमव्रणएवयोरणेव्रणमाधत्तहरस्यमस्तके ॥ व्रणमायुधिपार्थतस्यतेविदधातिस्ममृधंविनैवकः ॥ १०४ ॥ वत्सद्वेषिनियुद्धजीवनभुजप्रख्यानिधेमाहृतेकर्णाकर्णिकयानिशम्यभवताप्राप्तामवस्थामिमां ॥ शोकेनानिशमेकचक्रनगरीभाजांचबाष्पायितुंस्वस्त्रीयैः सहसौबलस्यचमुदेकोप्येषकालोऽभवत् ॥ १०५ ॥ मध्य

१ अन्यजनान्प्राति वाणीप्रसारोन यत्रदेवाअनीशा स्तत्रजनानां कावाता २ स्वस्त्रीयैः भगिनीसुतैः ३ सौबलस्य शकुनेः

शमीमभजन् ॥ पद्यं ॥ क्रमेणमत्स्येंद्रपुरोपकंठेकरालमापुः पितृकाननंते ॥ वधूद्रुहाभाविनिसूनजानांवधेप्रदेशस्यादिदृक्षयेव ॥ २ ॥
शमीतरौतत्रनिधायशस्त्रमर्मातदंनर्ज्वदलग्निकल्पं ॥ जगाहिरेवेषमिवान्यमुच्चैर्ध्वजंविराटस्यपुरंप्रवीराः ॥ ३ ॥ समत्वमुत्कर्षनि
कर्षयोः स्वंसंदर्शयिष्यन्निवधर्मसूनुः ॥ क्रमेणहंसः परमोहिभूत्वाकंकत्वमापद्यतसद्यएव ॥ ४ ॥ त्रिदंडकाषायकमंडलूज्ज्वलोज
पस्फुरद्धृतपटोयुधिष्ठिरः ॥ उपानहंदारुमयींपदास्पृशन्नुपामदत्संसदिमेदिनीश्वरं ॥ ५ ॥ पुरार्जुनस्येवयनित्वमेनदस्यापिकामप्य
परांसपत्नीं ॥ संपादयेत्किनुममेतिकृष्णानथाविधंवीक्ष्यनृपंशशंके ॥ ६ ॥ दृष्ट्वासमुत्थितोमात्स्योधृतप्रश्रयविस्मयः ॥ तत्पाद
पांसुंफालांतेचक्रेतंपुनरासने ॥ ७ ॥ दुर्वीरगर्वामहनोथभीमोदर्वीकरोदाशीनसूदभावः ॥ शोणाधरालोलुपसूतसूनोः प्राणानि
लान्पाययितुंकिलासीत् ॥ ८ ॥ पितुः सखायंपरिपूज्यमेधैर्दिनेदिनेतृप्तिमिवापनेतुं ॥ सूदाकृतिः सोपिययौविराटंवृकोदरोवृत्त

१ हंसः परमहंसः पक्षिविशेषश्च २ कंकत्वं कंकसंज्ञां बकत्वंच ३ दर्वीकरः दर्वीहस्तः सर्पश्च ४ सूदभावः पाचकत्वं नाशकत्वंच.

संप्रतिविमतजनवितीर्णविविधविपिनक्लेशमनुभवतोभक्ताभावंबुभुत्सुरेवमाचरिषं ॥ तद्बहुधापरीक्षितेनभवतः शीलेनसमंजसे
नप्रश्नोत्तरेणचप्रसेदिवानस्मि ॥ तस्मान्ममानुग्रहेणस्वमान्निवृत्तैरिवभूयोप्युत्थितैरनुजन्माभिः सहत्रयोदशीशारदंरूपांतरवंतंभ
वंतंकोपिनजानीयादितिवरंचतमरणिंचविस्मयविस्मारितनयनपरिस्पंदमायानिजनंदनायप्रतिपाद्यसपुमानंतर्दधे ॥ पद्यं ॥
तस्मादृशोभगवतोवचसानिकाममासाद्यमोदभरमाश्रममागतानां ॥ प्राप्तारणेर्द्विजवरस्यशुचैवसाकमंतंजगामसमयोपिमहान
मीषां ॥ ११२ ॥ ॥ इत्यनंतभट्टकविकृतौचंपूभारतेपंचमस्तबकः ॥ ॥ तदनुतेभरताव्यवधाश्रयात्वरमहायनलंघनकांक्षिणः ॥ अति
चिरंरत्रिभांडविवर्द्धितानननुचरानिवतामटवींजहुः ॥ १ ॥ गद्यं ॥ तदनुतदनुचितवचनसाहसाधिगतवाहसाधिपवपुषंनहुषमीदर
दमुनः शमनायचतुर्णववारिकांक्षिणः पारिकांक्षिणः कोपोदिताच्छापोदधेरुत्तरैरुत्तार्यतस्मादेवविस्मारितानिजविधिदुर्विलासा
दासादितवराः वरारोहयातयासहदुःसहनिजधामपिधानवैदग्ध्यमभ्यासितुकामाइवमात्स्यनगरस्यानतिसमीपपितृवनगामिनीं

१ प्रतिपाद्य दत्वा २ समयः संकटसमयः ३ व्यवधा अंतर्धानं ४ हायनंवर्षं ५ वाहसाधिपः अजगरराजः ६ दमुनाः अग्निः ७ पारिकांक्षिणः ऋषे
अगस्त्यस्य ८ उत्तरैः नौभिः प्रविवार्यैश्च ९ दुःसहनिजतेज आच्छादनचातुर्यं सहाप्या शम्याः सकाशात्स्वर्गेतुमिच्छुकेव.

रूपभाजोस्याजातिनैच्यान्नतंशिरः ॥ मुधेष्णायास्तुवीक्ष्यैनांसुंदरींव्रीडगौरवात् ॥ १९ ॥ वनभुवइवमाधवोदयश्रीर्मनुजपतेरवरोध



योषितोसौ ॥ अनुदिनमखिलालिलालनीयैरलमकरोत्तिलकैरतीवदृश्यैः ॥ २० ॥ गद्यं ॥ अनंतरंस्वैवशाभ्रमादृतकंकतमतिरसो



त्पादनचणमधिगतशोभनाटनपाटवमाश्रितगंधर्वकुलमाकलितगोत्रोपलापंपंचानामपिरूपमुदंचयंतीपांचालनृपतिसुतापंचापि

पतीननुयातवती ॥ पद्यं ॥ विमतानपिनैर्जित्वाविवामामिवदायकः ॥ अक्षेष्वकुरुतावृत्तिमवनींद्रेष्वधर्मभूः ॥ २१ ॥ गद्यं ॥ एवं

तैस्तैः स्वकृत्यैः संपादितंशिरः कंपंवयः कृतामिवसंततमनुभवनातेनमहीपतिनाबहुमानिताः पृथासुताः यथाविवासनखेदंतथा

तदीयमपिस्वरूपमितरेजनास्तत्रनाज्ञासिषुः ॥ अथैकदानत्रसुधेष्णायाःप्रेषणेनमदनोत्सवासवायवासवायतनसदृशंवासगेहमाग

तांकौरवाधमकरपरिक्लेशदुः खादिवविवर्णेनवासमावगुंठितांगींनखशशिपरंपरासेवनलालसतयेवप्रपदसंमुखीनलोचननीलो



१ अखिलालयः सकल भृंगाः सकलसख्यश्च २ तिलकैः वृक्षविशेषैः विशेषकैश्च ३ स्ववशा शिल्पकारिणी ४ अश्वकुलं गंधर्वकुलंच ५ कृतगोत्रनिन्हवं कृतगोरक्षणंच.

57

शरावपाणिः ॥ ९ ॥ कुलशैलशृंगइवजंगमेतदाकुरुकुंजरेचलतिकंपनंमुहुः ॥ वसुधैवतस्यनपुरस्यकेवलंवहतिस्मकीचकभुजा
प्यदक्षिणा ॥ १० महानसेऽवतरतोजनस्यसपतिः कृतः ॥ महानसेवतरतोमात्स्यंस्वादुषुकर्मसु ॥ ११ ॥ स्त्रीत्वेनयोगः खलुवी
रगर्ह्यः पुंस्त्वेनत्वांतः पुरवासविघ्नः ॥ इतीवपंढत्वमवश्यंभाव्यमादायपार्थोपिजगाममात्स्यं ॥ १२ ॥ कृतवसतिरसौनृपस्यक
न्यागृहभुविनर्त्तयतिस्मतालपाणिः ॥ मधुकरमुखरोलतावनांतेमलयगिरेरिवमारुतप्ररोहः ॥ १३ ॥ ममध्वजांकस्यबिभार्तिसंज्ञाम
साविंतिप्रेमभरादुपेतः ॥ प्रसूनधन्वेवसुतोपिमाद्यामत्स्येंद्रमागत्यननाममूर्ध्ना ॥ १४ ॥ तंपश्यन्नकुलंराजातंद्रालुर्दृढनिमेषणे ॥
निजांमत्स्येश्वराभिख्यांनिनायप्रकटार्थतां ॥ १५ ॥ कशांकरेसबिभ्राणंशशांककुलभूषणं ॥ मंदुरापतिमातेनेनंदुरापपराक्रमं ॥ १६ ॥
अस्मत्तिरोधिविरतेर्भवितात्रहेतुरेतद्दिनैः कतिपयैरितिजानतेव ॥ पांडोः सुतेनचरमेणचतस्यराज्ञोवृंदंगवाप्रजुगुपेपृथुकौतुकेन
॥ १७ ॥ आगतानगरवासवांछयादेवतेवविपिनस्यपार्षती ॥ केलिपुष्पमिवदंतकंकतंबिभतीनृपवधूमुपागमत् ॥ १८ ॥ सैरंध्री

१ महानसे पाकस्थाने २ विरोधिः तिरोधानं ३ दंतकंकतं फणीतिख्यातं.

न्नपायंकोवानधत्तेवदकोमलांगि ॥ त्वन्नाभिकूपस्यतटेनिवासीनदृश्यतेसंप्रतिमध्यभागः ॥ २९ ॥ अक्षीणवक्त्रशशिसेवनलाभ
तोषादालिंगितामिवमियोरजनेस्त्रियामीं ॥ त्रेधाविभज्यरचितांवहमेद्यवेणींकांसिंहसंहननमूहायितुंवियुक्तं ॥ ३० ॥ मुदातिबहुप
रागधूसरापित्वमपहरस्यधुनामनोमदीयं ॥ रतिरिवहरकोपदह्यमानस्मरतनुधूमलवाविलाखिलांगी ॥ ३१ ॥ त्वामुल्लसाद्रिंवफ
लाधरांमेमामप्यनंगाशुगमार्दितंते ॥ विशंकमस्मिन्विजनप्रदेशेपद्मानननेपातुमयंहिकालः ॥ ३२ ॥ गद्यं ॥ इतितस्यताद‍ृगंवच
नमाकर्ण्यापिचित्तचंपकमंजरीचंचरीकायमाणपंचशरविकारापांचालीगिरमिमांस्मररागानिमिरकौमुदीमुदीरयामास ॥ पद्यं ॥
अंतः पुरेषुविहरन्नापिकीचकत्वंसैरंध्रयेस्पृहयसीतिविगर्ह्यमेतत् ॥ रम्येषुकल्पकुसुमेषुचरन्नाद्विरेफोरज्येताकिंपितृवनद्रुमगुच्छि
कायां ॥ ३३ ॥ प्रतायतेचपलतापानिवर्त्नापुयाहटात् ॥ इष्टार्थसिद्धेः प्रागेवादिष्टांतंदोग्धिसानृणां ॥ ३४ ॥ गंधर्वाः संतिमेकां

१ सिंहसंहननं अत्यंतसुंदरं २ पातुं प्राशितुं रक्षितुंच ३ चंचरीकायमाणः भ्रमरायमाणः चंपकेभ्रमरा नागच्छंतीतिभावः ४ दिष्टांतं प्रलयं ५ गंधर्वाः गुप्तरूपाः

त्पलांराजीवशंकयानुव्रजताराजहंसेनेवराजतभाजनेनरा जिनकरांचलांपांचालसुतांविलोक्यपंचेषुबाणवं चित विवेकोमंचादुपसृ
त्यकिंचिदाकुंचितमौलिः कीचकोनीचांवाचमुवाच ॥ पद्यं ॥ इदमेवहिमद्मभद्रभद्रंयदिदानींतवमार्दवज्ञमंघ्रेः ॥ अयमप्यहम
स्मिधन्यधन्योहारिणाक्षित्वदपांगगोचरोयः ॥ २२ ॥ नतगात्रियदागमेनमांनयसेमोदगिरेराधित्यकां ॥ चिरपुण्यफलांकुरश्रियां
दिवसोवैजननस्तदेषमे ॥ २३ ॥ अन्वर्थतामालिनितेभिधायाः कुतोनजागर्त्यधुनाकचेषु ॥ अस्याः प्रतीपोदितवर्णपंक्तेरर्थोथ
वालंकरणंह्यमीषु ॥ २४ ॥ बाव्होरनंगदत्वस्यबालेतेकारणेउभे ॥ एकंतयोस्तुलावण्यमितरन्नावगम्यते ॥ २५ ॥ अरम्यभात्वंभ
जतेजगत्यामंगेषुकांचिद्विकलोपिलोकः ॥ निरीक्ष्यसेत्वंतुविचित्रमेतन्मध्येनहीनापिमनोज्ञमूर्त्तिः ॥ २६ ॥ नपल्लवस्तान्विनावि
द्रुमश्चताम्रोधरोयंतवाबिंबमेव ॥ चंद्रोयदिस्याक्तववक्त्रमेतच्चंद्रस्याबिंवंसहजंहिलोके ॥ २७ ॥ कांतेतवाननमिदंकमलावलीगुत्र
ष्टुंपुरासरासिविस्मृतमेवधात्रा ॥ पश्चाद्विचिंतिततवतातदुपांतभागेसंलक्ष्यतेविरचितः खलुहंसपादः ॥ २८ ॥ कूपस्यतीरे निवस

१ वैजननःउत्पत्तिदिवसः २ अन्वर्थता मालायुक्तत्वं ३ नीलिमेतियावत् ४ अनंगदत्वस्य कामदातृत्वस्यअंगदराहित्यस्यच ५ हंसस्यचरणः पक्षे प्रमाद
चिन्हं हंसपदमिति.

वृत्तांतोदेव्यागेहेचरन्जनः ॥ नयनांभोविमुमुचेनतुकिंचनभाषितं ॥ ४२ ॥ मायंमहानसशयंशनकैर्ययौसाभिमिरंहः पृथुशराव
कृतोपधानं ॥ धूमाधिरोहमलिनंवसनंवसानंनीलांबुवाहपरिवीतमिवाचलेंद्रं ॥ ४३ ॥ निश्वस्यदीर्घमियमंतिकमावसंतीस्पृष्टे
नवाष्पमुकुलैः कुचयोः स्खलद्भिः ॥ वृद्धेनतेनकिमिदंव्यसनंतवेतिपृष्टासगद्गदमुवाचविषण्णचेताः ॥ ४४ ॥ किमद्यमेदुः खम
पत्रपाकाकोवीरपत्नीत्वपदेभिमानः ॥ सर्वगतंकीचकनीचापिद्रात्[1]धृत्वाकचेताडनमाप्तवत्याः ॥ ४५ ॥ मयिदुः खेनघुष्यंत्यांम
त्स्याधिपसभांतरे ॥ तथ्यस्येवयतेरासीद्धर्ममूनोरुपेक्षणं ॥ ४६ ॥ बुभुक्षनेन[2]जीवंतीमारितामेवमांनृपः ॥ कल्याणंखलुनत्तस्यकंकै[3]
भावभृतोधुना ॥ ४७ ॥ तस्यैवाज्ञापथेजस्त्रंचलतास्खलनंविना ॥ भवनाखलुनिः शंकंपरामृश्येकचेपरैः ॥ ४८ ॥ दुः शासनाद
प्यधिकापराधः सूतात्मजोयंननिहन्यतेचेत् ॥ आद्येकचग्राहिणिनाशितेपिसमायुपावेणिमवेहिमांच ॥ ४९ ॥ अयंबलीयानितितेम
तिश्चेदन्यत्रमांक्वापिनयस्वभीरुं ॥ अज्ञातवासेप्यनुभूयमानेरक्ष्यंहिशीलंगृहिणजिनानां ॥ ५० ॥ श्रुत्वावधूगिरमिमांस्वपनोप

१ पिद्रातं विटात् २ बुभुक्षवे भोक्तु मिच्छाति ३ कंकभावः गृध्रत्व संज्ञांच.

ताबाधतेयान्स्मरोनिशं ॥ स्वाभिख्यांस्वास्त्रसंख्यांचवहंतीतीर्ष्ययाकिल ॥ ३५ ॥ दोष्मतामवतंसास्तेस्वरूपंनैवकेवलं ॥ गोपा
यंत्यप्रमादेनपरेभ्योमांचमानिनः ॥ ३६ ॥ तदद्यपार्थिवामेस्मिन्संप्रातिष्ठाममेयादि ॥ नेतुत्वांचारयिष्यंतिदाक्षिणोपिधृतक्रुधः
॥ ३७ ॥ इत्यूचुर्षीसामहिषींकुरूणांशेमुषीमती ॥ सद्योनिववृतेतस्माच्चित्तवृत्तिरिवात्मनः ॥ ३८ ॥ यथायथास्याधावंत्यारिंखणे
नपदोर्युगं ॥ तथातथारुषारुण्यंतस्याधत्तदृशोरपि ॥ ३९ ॥ कृष्णाततस्तेनकृतान्नभासाकेशेगृहीत्वाभुविपातितामा ॥ पर्यायब
द्धोद्यमाविश्रमाभ्यांपद्भ्यांकराभ्यामपिपर्यभावि ॥ ४० ॥ प्रहारभीत्येवतदामृगाक्ष्यानाड्यांक्काचिद्यांतरधत्तमंज्ञा ॥ उद्गम्यसादूर
गतेप्रहर्त्तर्युद्धाटयामासदृशौचिराय ॥ ४१ ॥ गद्यं ॥ तदनुशनैरुत्तस्थुषीधरानलपरागधूमाग्मितिरोहितदीधितिनयावासगपला
पितमहामहौषधिलतेव विलुलितचूर्णकुंतलतयाचक्रवाताकुलीकृतवालपूलिकाचमरमृगीवसुतान्ववायजनपदस्यप्रथमामीति
बाधामिवबाष्पधारामुत्सृजंतीक्काचिदापिशरणमलभमानासायाज्ञसेनीमंदंमंदंतदेवभूपातिभवनमभिजगाम ॥ पद्यं ॥ दृष्ट्वातांज्ञात

१ स्वाभिख्यां स्वकांतिं २ शेमुषीमती बुद्धिमती ३ ईतिबाधां अतिवर्षणपीडां.

प्रसीद मयि तुल्यनिकारपात्रे ॥ केलीषु हार्दकलहेषु च केशकर्षिं पादाहतिं च दधती कुरुवैरशुद्धिं ॥ ५८ ॥ पंचसंतु धवास्तेभ्यो मुंच भीतिं मयि स्थिते ॥ पंचवल्के वने दृष्टे किं चरेयुः परे मृगाः ॥ ५९ ॥ मस्तकेंजलिपद्मस्य मम मंप्रतिमालिनि ॥ प्रसादगंसिनं पादं प्र



यच्छ सहचारिणं ॥ ६० ॥ गद्यं ॥ इत्यतिवेलं प्रलपंतमेनं प्रतिजुगुप्सया मुखसाचीकरणेत्रपाहेतुकनाम्र्यभिनयंती सा कुंतीस्नुषा तृष्णाभिभूतेव वचनमिदं किंचिदुदंचयांचक्रे ॥ अयि भद्र जगदिदमाक्रुद्धं क्षुद्रायितुमानिद्राणाय शंबरद्रुह शासनमुद्रणाय द्रुह्यति को वा जनः किंतु इयानेव प्रस्तुते विशेषः ॥ पद्यं ॥ स्त्रीपुंमयोर्भावनटौ मिथो यौ पूर्वं स्तयोर्वीळतिरः पटेन ॥ चिरायनेस्पष्टयितुं स्वरूपं परस्तुतन्नोत्सहते नुमंतुं ॥ ६१ ॥ किं बहुना ॥ गीर्भिस्तवाग्य चतुराभिरुदस्यनेमे गंधर्वदंडनभयं त्वदवाप्तिविघ्नः ॥ तस्माद्व्रजस्वरतिसौख्यभराय रात्रौ भीमे स्थिते नतमसि नर्तनगेहमध्यं ॥ ६२ ॥ तथैव लीलांतनवानि तत्र तल्पातु सीमानमुपेयुयस्ते ॥ भयो यथांतःपुरिकाजनानां वक्रं न पश्येर्न पुनस्पृशेश्च ॥ ६३ ॥ गद्यं ॥ एवं मृगाक्ष्या वचनमाक्षिकस्य क्षौद्रपटलीभूतकर्णपुटः प्रमोदार्णवजलमानुषायमा

नीतंशोणत्वमक्ष्णिपुनरुक्तयतोरुषापि ॥ तस्याधरोष्ठमुदवेपतानिर्गमिष्यत्क्रूराक्षरावलिविमर्दनशंकयेव ॥ ५१ ॥ गदापिसातिष्ठतुमेगभीरानियुद्धमात्रंमाशिनीर्मिमाणे ॥ क्वमेघवाहः क्वमरालवाहः क्वतार्क्ष्यवाहः क्वमहोक्षवाहः ॥ ५२ ॥ हिडिंबकिर्मीरबृहद्रथात्मभूबकादिहत्यातरतस्त्वपांबुधौ ॥ निमज्जनायैंवभुजस्यमेऽधुनासृजस्यमुंकीचकसूदनोद्यमं ॥ ५३ ॥ तथाप्यौदास्यमेतास्मिन्ननौपयिकमेवमे ॥ क्षोदीयानपिवध्योहिकुलस्त्रीध्रुङ्महीयसां ॥ ५४ ॥ अयेनन्विाकिंबहुना ॥ तस्यासृजायावकितांघ्रिमस्थ्नांचूर्णेनकर्पूरमयांगरागां ॥ अकीर्तिमष्याथविलिप्तनेत्रामलंकरिष्येममवीरलक्ष्मीं ॥ ५५ ॥ वीरश्रियः शिल्पमिदंमयोक्तंयथार्थभावादनुभूयसद्यः ॥ सैरंध्रिकाचारविनोदनेऽपितवानुसारेच्छुमवेहिमांत्वं ॥ ५६ ॥ त्वयापुनः श्वः स्मितपूर्ववाचाप्रत्युत्पतंत्येवकटाक्षजालैः ॥ क्रीडांविधातुंक्रियताममुष्यसंकेतभूस्तांडवमंडपोऽयं ॥ ५७ ॥ गद्यं ॥ इत्याश्वासितवनः पत्युरनुमत्यापुनरापत्यनेपथ्यभवनमधिशयालोरस्याश्वेतसः पलायमानस्यभयभरस्यसापिविभावरीसहचरीबभूव ॥ अन्वेगुरेत्यचपलः पुनराश्वसत्तांसुभ्रू

१ अनौपयिकं अयुक्तं.

रोरधिकेकुचेमांसुधाधिकंपाययचाधरोष्ठं ॥ ६७ ॥ इत्थंससांत्ववचनोऽयमर्धमंचमारोढुमानमितपूर्वतनोः सभीमः ॥ मुष्ट्याहातिं



निटिलसीम्निचकारशत्रोरायुर्लिपिंशिथिलयन्निवधातृदत्तां ॥ ६८ ॥ गंभीरचेताः सचकीचकोपिगंधर्वबुध्याप्रतिहंतुमेनं ॥ सद्योभ



वित्र्याः शवतादशायाः साधारणीमेवबबंधमुष्टिं ॥ ६९ ॥ जवंभजंतौजयनर्षवंतौहषंवहंतौहधिरंकिरंतौ ॥ परस्परंतौपटुशब्ददंतौ नियुद्धकेलिंनिशिनिर्मिमाते ॥ ७० ॥ अक्ष्वेलितारावमवीरवादमवीक्षकश्लाघनचाटुगुंफं ॥ अनुच्चनिश्वासमहुंक्रियाकमभूतपूर्वंतद भून्नियुद्धं ॥ ७१ ॥ शिलीमुखैश्चित्तजचापजुष्टैर्दत्तानिरंध्राणिदधन्निजांगे ॥ समीरजातेनसुधून्निनोपिसकीचकोनैवचुकूजाकिं चित् ॥ ७२ ॥ तस्मिन्हतेनिपतितेबककवैरिमुष्ट्यारंगेणतेनममकंपिचलत्पताकं ॥ पार्थाग्निरेणपरिशीलितमुत्तराद्यैः कन्याजनैर भिविडंबयतेवनाट्यं ॥ ७३ ॥ गद्यं ॥ तत्रमंडपेपिडनयाकृतंनंस्यदस्योस्तैरमंतरमाविलोकयप्रहर्षवत्यापार्षत्याश्लाघापूर्वमाघ्रातभु



१ शिलीमुखैः भ्रमरैः बाणैश्च २ चित्तजचापजुष्टैः चित्तजचापः कामधनुः कुसुमंच सेवित येस्तैः ३ समीरजातेन वायुसमूहेन भीमसेनेनच ४ कीचकः वेणुः विराटस्यालश्च ५ तरसं मांसं.

णत्हृदयःसदनमासाद्यसमालंभनपूर्वेणसलिलावगाहेनविरजीकृतांगोऽयमंतरिवबहिरप्यवलिप्तः[1] ॥ ततःपरंभगवतिनिजतनुज[2]प्र
जावतिमनोरथसिद्धिंसंपादयितुमिवकमलबंधौचरमामिंधौनिमज्जमानेनिरुध्यमानदिविषदध्वांते[3]ध्वांतकदंबेसंभृतसंभोगसंविधा
नः कीचकोनिवर्तितराजभोजनपरिवेषणकृत्येनपवमानसूनुनाप्रविष्टपूर्वेनर्तनगेहमगाहत ॥ पद्यं ॥ कसालभंजिकेवा[4]मि
मालिनिस्तंभपार्श्वगा ॥ इत्यसौभिमतल्पांतमाससादशनैःशनैः ॥ ६४ ॥ ततस्तंवल्लवोपिस्त्रैणसमुचितेनकंठस्वरेणमृदुलमेवंज
गाद ॥ वधूशतमनादृत्यमामपेक्ष्ययदागमः ॥ तत्त्वांबहिर्गत[6]प्राणंमन्यतेमेमनोऽधुना ॥ ६५ ॥ गद्यं ॥ एवमुक्तवतेवृकोदराय
कीचकः पुनरपिवाचंमृदुपदामुपदामाददे ॥ पद्यं ॥ गंधर्वानपिदायितास्तृणायमत्वामामेवंगनाविधयेप्रतीक्षमेयत् ॥ देवत्वाद
पिसुतनुत्वयाऽधुनामेमर्त्यत्वंजगतिमहत्तरंहिक्लृप्तं ॥ ६६ ॥ सुराधिकत्वेपिपदेविनिर्णिमह्यंनवास्त्येवाहिकृत्यशेषः ॥ कुरुष्वमे

१ अवलिप्तः गर्वितः चर्चितश्च २ निजतनयः कर्णः तस्य प्रजावती भ्रातृजाया द्रौपदी ता ३ निरुध्यमानः दिविषदांदेवानां अध्वामार्गः तस्य अंतः मध्यः येनतस्मिन् ४ सालभंजिका पुत्तलिका ५ मालिनीतिविराटनगरप्रसिद्धंनाम ६ बहिर्गतप्राणं अन्यासक्तप्राण प्राणरहितंच.

मोन्मीलनैः ॥ ध्वांतेगौरूडभित्तिभंगिपिशुनेप्योघंद्विषांधावितुंज्येष्ठस्याध्वनिदिव्यदृष्टिमकरोद्दोर्दर्पसिद्धांजनैः ॥ ७६ ॥ निपातितान्स्वेननिरीक्ष्यतत्रमूतान्सवीरः सुमनायतेस्म ॥ उत्पातमुद्रांदधतास्वपित्रातरूनिवारण्यतलेविरुग्णान् ॥ ७७ ॥ गंधर्वभीरुषुजनेष्वितरेषुतत्राविष्वकपलायनपरेषुविमुक्तबंधा ॥ कृष्णाचकीचकरिपुश्चकृतप्रशंसावन्योन्यमभ्यगमतांनगरंपुनस्तौ ॥ ७८ ॥

॥ गद्यं ॥ ततः क्षणादेवसंध्यारुणिमकरंबितेनांबरमणिबिंबेनपरिचुंब्यमानेशंबायुधहरिदंगणेपारिणोरुधिरमुचापिशितापि¹नकृतानुषंगरंगंविडंबयतिशुचानिरस्तमौलिभि²र्नगलितवाग्भिर्निष्पंदतनुभिर्नीखिलैरपिपौरैर्नृपनिलयद्वारंनाविडमभूत् ॥ पद्यं ॥ वध्वस्तदामंडलशोनिविष्टारुंधद्भिराशारुरुदुर्विलापैः ॥ महत्सुदुःखेष्वपिजृंभितेषुमालिन्युपालंभनमस्पृशद्भिः ॥ ७९ ॥ तस्मिन्दिनेसन्निधिमागतासाकृष्णादृशंकेकयराजपुत्र्याः ॥ मर्पीशलाकार्पणयाविनापिमंदेनरामश्रुकणैरकार्षीत् ॥ ८० ॥ तावद्युधिष्ठिरमुखाअपिवा³तजातव्याधूतकी⁴चककुलाकुलकोटिभागं ॥ निर्यत्प्रियानयनवारिझरीपरीतंसंके⁵तशैलमधिरुह्यनिशश्वसुस्ते

१ गारुडः पाचेति ख्यातं २ मौलयः शिरोवेष्टनानि. ३ वातजातः भीमः वातजातं वायुसमूहश्च ४ कीचककुलं कीचकस्यकुलं वंशः वेणु समूहश्च ५ संकेत शैलं अज्ञात वास संवत्सरशापथ मेव५र्वतं .

जः कुरुव्याघ्रोनिर्गत्ययथापुरमविकृतमानसोमहानसोदरंप्रविश्यमुखेनाधिशिश्ये ॥ पद्यं ॥ निपात्यमालिन्यपितत्रशत्रुंचक्रंद
भीत्येवचलाग्रपाणिः ॥ निशम्यतत्किंकिमितिब्रुवाणाः सर्वेपितस्यावरजाः समीयुः ॥ ७४ ॥ विलोक्यतंभ्रातरमात्तशोकामृत्युद्विप
स्येवापिधानापिंडं ॥ ज्यायानिवामीविदधुः स्थलींनामस्रेणगुल्फद्वयसींनिजेन ॥ ७५ ॥ गद्यं ॥ ततस्तेमोदरविपत्तिनिमित्तमियमेवेति
रोषरूषितचेतसो निवेशितशवपिंडभरस्यमूर्तैर्भीममुष्टिभिरिवनारिकेलफलैरुपनध्यमानस्यचरमविमानस्यस्तंभदारुणिसंदानि
तांकौनेयसीमंतिनींतिमिरमुदिरसौदामिनीभिः करदीपिकाभिर्दीयमानचंक्रमावकाशेनपथापितृवनमुपनीयस्वकीयविवेकसं
त्यासहचित्यामत्याक्षुः ॥ तावदेषाचकिनचाकिनाहाहानाथनाथजगत्प्राणभूतविपत्समयबंधोसंप्रतिकातारंत्वमतीपरिगृह्यमुग्धामि
मांकथंनगणयसीत्युच्चैररोदीत् ॥ पद्यं ॥ तत्रास्याहृदितस्वनैरथजवादाकारितोमारुतिः सक्थ्नोर्वातबलाददलातमहस्,।मीषत्प्र

१ अस्रेण रक्तेन बाष्पेणच २ गुल्फद्वयसीं गुल्फप्रमाणां ३ रूषितं गुंठित ४ संदानिता बद्धा ५ जगत्प्राणभूत जगत्प्राणः वायुः तस्मात् भूत जात
भीमसेन पक्षे जगत्प्राणेत्येकंपदं भूतविपत् भूतानां जीवानां विपत् इत्यस्यचाग्रेसंबंधः ६ रसवती रमिकां पाकशालांच.

कैराकिंचनैरेतैर्वंचितः खलुवृद्धोविराटइत्यभिधायसुयोधनोराधेयेनसहकृतहस्ततालोवल्गद्भुजाशिखरमुच्चैर्जहास ॥ ततः ॥ पद्यं ॥ संक्षोभेनगरस्यमत्स्यनृपतेर्योद्धुंस्वयंनिर्गतानदृष्ट्वानानवकीर्णिनोवितनुमोगच्छाधुनात्वंपुरः ॥ इत्युक्तः कुरुभूभुजासदसिगोहर्तुंत्रिगर्तेश्वरस्तस्यैवापपुरींदिनावधिरिवार्यम्णः प्रतीचींदिशं ॥ ८५ ॥ गद्यं ॥ नत्रदक्षिणेनपुरंव्यग्रतरसैन्यपरिवृतेनतेनकाल्यमानंक्वचिदरुणतयानिमग्नजमदग्निकुमारोष्णनिश्वासवेगाविलुलितवीचीप्रपंचमिवस्यमंतपंचकंक्वचिन्नीलिनयामदकंडूलवेतंडशुंडाविधूनिताविटपमालमिवनमालवनंक्वचिद्धवलनयामंदरगिरिमंथनपरिक्षोभितफेनकूटमिवक्षीरोदमध्यमुन्नमितलांगूलमुद्रमितहुंकारमुच्छलितधूलीकमुद्दामघंटारवंगोधनंनिशम्यसेनाकुंभिकुलगंभीरबृंहितारंभैर्मंदिराग्रसिंहप्रतिच्छंदवृंदमुखकंदरमौननियमंविभिंदन्ननुकूलपवमानघुरोनाटितपटैर्वैरिभटजीविततहरणायवैवस्वतमिवाव्हयद्भिः केतनदंडैः परिमोटितगगननाटिनतिटाविटपिवाटोविराटोपिरणप्रयाणारंभटीमाटीकत ॥ पद्यं ॥ संख्यायययानेपुममारुरुक्षाकोलिंस्पृशांकीचकबांधवानां ॥ अश्वप्रसंगे



१ अवकीर्णिनः क्षतव्रतान् २ गाःधेनूः किरणांश्च ३ प्रतिच्छंदः प्रतिमा ४ वाटः समूहः ५ संख्याय युद्धाय.

॥ ८१ ॥ तदनुविदितवार्त्तोधार्त्तराष्ट्रश्वरेभ्यः शुभगुणचारितेभ्यः सूतजानांशतस्य ॥ वसतिमरिजनानांमत्स्यभूपालपुर्य्यांत्दृदय
मुकुरलग्नैर्हेतुभिर्निश्चिकाय ॥८२॥ अन्येद्युरंगेश्वरसौबालिभ्यामास्थायगोष्ठीमाधिपः करूणां ॥ भीष्मादिमान्बंधुजनान्विलोक्यगं
भीरमेवंगिरमाबभाषे ॥ ८३ ॥ गद्यं ॥ भोभोविदितंकिंभवतामपीदं ॥ संप्रतिखलुमात्स्यपुरेकामपिकामिनीकामयमानः कीच
कोनिशितस्याः पतिभिरदृश्यैः पंचभिर्गंधर्वैरनुहरासिम्वसंख्यापदाभिधेयमनीयत ॥ तस्यैपुनरपितद्वंधनस्तदनुजाअपितथैवेति
काचिदियंकिंवदंतीकर्णात्कर्णमधिरोहति ॥ एवंचेदसंशयंमाचतुष्पथमंडापिकास्तंभसालभंजिकेवसर्वजनकरपरामर्शभाजनंपां
चालसुता ॥ तेपिपुनरज्ञातवासिनः पैरेतपातिपवमानपाकशासननाश्विनांपारस्त्रैणेयास्तस्याः पतिविडंबकाः ॥ तेष्वपिद्वितीयेनै
वबाहुशालिनावधूद्रुहांनिहंत्राभवितव्यं ॥ अहोसर्वत्रापिशौर्यंखलममीषांदौःशील्यं ॥ तथाहि ॥ पद्यं ॥ देशेजरासंधमुखैर्व्यर्हंधन्व
नोपिकिर्मीरहिडिंबमुख्यैः ॥ गूढेनिवासेपिचसूतपुत्रैः कनुस्थितास्तेकलहंविनान्यैः ॥ ८४ ॥ गद्यं ॥ अत्रैवास्थित्वावेषांतरकचु

१ किंवदंती वार्ता २ परेतपतिः यमः

म्नोर्मध्यभागकुहरविंदशिलेव ॥ ९३ ॥ संध्याबभौसासमरेभटौघोबिंबंविभियादितिभीतिभारान् ॥ विवस्वताविद्रवतावसृष्टा दिवस्थलेदीप्तिरिवाग्निदेया ॥ ९४ ॥ नभः पयोधेर्नवविद्रुमश्रीः क्रमेणसंध्याकशिमानमागात् ॥ उद्यत्प्रकोपैरुभयैरनीकैर्विभज्यर्नीतेवविलोचनाग्नि ॥ ९५ ॥ ध्वजिनिजनितरजोंधकारंत्वरितंबांधवकौतुकातिरेकान् ॥ परिरब्धुंमिवांधकारसंघः पैरमार्थोरणचत्वरंजगाहे ॥ ९६ ॥ संकोच्यपक्षानेकेषुसंविशत्स्वपिपत्रिषु ॥ विस्तार्यपक्षानपरेविचेरुस्तत्रपात्रिणः ॥ ९७ ॥ शरत्वर्पभयेन तत्रयुद्धेसफलेकंकैकुलेगनेविदूरं ॥ प्रमदंदधदेकएवकंकः परिबभ्रामसभीमपक्षपातः ॥ ९८ ॥ अन्योन्यपट्टसविघट्टभवैः स्फुलिंगैराजिस्थलेरुधिरकर्दमभाजियोधाः ॥ आगामिनीषुमामितिष्वधिकंविधातुमासन्प्रतापनवबीजमिवावपंतः ॥ ९९ ॥ नलिनीशाबिंबपथचारमलब्ध्वानभसिभ्रमत्सुनवर्वीरसुरेषु ॥ करपल्लवौपरिनिपीडयमृगाक्ष्यः कलहायनक्रमशपंतसुराणां ॥ १०० ॥



१ परमार्थः सत्यः २ पत्रिषु पक्षिषु बाणेषुच ३ कंकः बकः कंकाख्यः धर्मः ४ सभीम पक्षपातः भीमस्य आसक्ति विशेष पक्षे भयंकरः पक्षाणां पातः चलनं तेनसह.

प्यभिधीयमानोगंधर्वशब्दोगरलायतेस्म ॥ ८६ ॥ मभ्यैश्चसूदैश्चतुरंगिभिश्चगोपैश्चविज्ञापितवीर्यभूम्नः ॥ दंतानिवेंद्रद्विरदः सपार्थान्धरिः पुरोधायरुरोधशत्रुं ॥ ८७ ॥ तृणकल्प[1]मपित्रिगर्तभूपं[2]तमुपेक्ष्यैवतदागवांकुलानि ॥ महदेवविलोकमात्रहर्षात्सह सामात्स्यचमूसमीपमापुः ॥ ८८ ॥ मौर्वीकुशांकितकरावथबद्धपंक्तीमात्स्यात्रिगर्तवसुधाधिपयोरनीकौ ॥ आध्मातशंखनिनद प्रणवप्रधानमायोधनाध्ययनमद्भुतमारभेतां ॥ ८९ ॥ मत्स्येंद्रमंदिरमहानसभक्ष्यवृंदस्वच्छंदभक्षणरहस्यवदावदेन ॥ क्ष्वेलारवे णवललस्यतदारिपूर्णांचित्तंनकेवलमकंपिदिशोदशापि ॥ ९० ॥ उदयेममरस्यसैनिकानामुभयेषामभिधेनवोविवल्गुः ॥ निज नामपरार्धवाच्यमेतान्निखिलंग्राहयितुंचरक्षितुंच ॥ ९१ ॥ नावदंबरपथाशमिगंतुम्नामनीकभरणीशमनस्य[3] ॥ कासरा[4]दहर धीशतुरंगः कांदिशीक[5]इवदूरमयासीत् ॥ ९२ ॥ पाटलीकृतपयोधरपंक्तिः प्रादुरासगगनैरथसंध्या ॥ त्रासरस्यरजनेरपिसी

१ तृणकल्पं तृणवत् पक्षे तृणानां कल्पः कल्पवृक्षः बहुदातेत्यर्थः २ त्रिगर्तभूपं सुशर्माणं पक्षे गर्तत्रययुक्तं पर्वतं ३ शमनस्य यमस्य ४ कासरः महिषः ५ कांदिशीकः भयपलायितः.

डः ॥ सेनाक्षयात्धृतशमः स्वयमाजिरंगः कंकादिवापचरमाश्रमसंप्रदायं ॥ १०७ ॥ गद्यं ॥ तदनुमुहूर्तंमुहुरविरलंबल्लैलमेव केवलमवलोकमानाबलशासनदिशायामोजायमानेनचंद्रमसाप्रसृतैर्मदकराटिघटाविषाणांकुरप्रतिफलनशतगुणितधवलिमवीचिभिर्मरीचिभिर्दलितरणविमर्दभटश्रमदुर्दशाविगटस्यचमूरापिप्रातिनिवर्तनवेगहर्षमाणगोधनपयःप्रस्रवणधारापातशीतालितसिकतायांपदव्यांपक्ष्मपंक्तिनिर्मीलनेनसमरभूरेणुभारेणलोचनयोर्निमीलनशिल्पकल्पिनबहुसाहाय्यकमुद्रयानिद्रयानीतायामिनींपाश्चात्यसीमानमत्यवावहत् ॥ ॥ इत्यनंतभट्टकविकृतौचंपूभारतेषष्ठस्तबकः ॥ आरूढेद्यामर्कबिंबेपरेद्युः साकंसैन्यैः सार्वभौमः कुरूणां ॥ पार्थादेकांबिभ्रदात्धृत्यगोत्रांमात्स्यादन्यांतत्पुरेहर्त्तुमागात् ॥ १ ॥ विदूरमार्गश्रमविह्वलांगीसेनासमस्ताधृतराष्ट्रसूनोः ॥ आभीरवाटांतिकएवतस्थौमद्योनिरुद्धेवनदाज्यगंधैः ॥ २ ॥ गद्यं ॥ तावत्तस्यपादानंसर्वाभिसारेणगाहंगाहंगवांव्रजंव्रजंगृहेजगृहे ॥ पद्यं ॥ दंडाघातेर्दीयमानेपियोधैर्दुग्धंभूयोदोहशेषंवहंत्यः ॥ घोषाद्गावोनिः सरंतिस्मयत्नाद्गो

१ बल्लं भामं २ गोत्रां पृथ्वी गोसमूहचं ३ आभीरवाटः घोषवाटः.

रराजहैमीरथकेतुराजीरज्यत्पटारक्तकणैः प्रकीर्णैः ॥ आकर्ण्ययुद्धाद्भुतमर्धमार्गाद्द्रष्टुंनिवृत्ताचरमेवसंध्या ॥ १०१ ॥ गद्यं ॥
तत्रतावदरिशरानिकरानिकृत्तमत्तगजसप्तिकुलपत्तिनवरक्तासिक्तरणचत्वरमनुभूयभूयसारोपेणसंवर्त्तसमवर्त्तिसमम्र्तित्र्दिनर्त्तित
धूर्त्तधार्त्तराष्ट्रशासनवार्त्तास्त्रिगर्त्तः कैवर्त्तइवमत्स्यचक्रवर्त्तिनमाहर्तुंमुहूर्त्तादुपावर्त्तत ॥ पद्यं ॥ मानिनामचरमोथसुशर्मामध्यवर्त्ति
नमनीकपयोधेः ॥ मंमुखोझटितिबंधमनैषीत्मज्ज्ययारिपुमपत्रपयाच ॥ १०२ ॥ भूपेपराभवपदेयुधिधर्मसूनोर्भ्रूवल्लिकंपकणिकामवनं
सयन्सः ॥ मथ्नन्बलानिरिपवेमरुतः कुमारोमात्स्यंविमुच्याविततारदशांतदीयां ॥ १०३ ॥ विराटसैन्येषुमिषत्सुयुद्धेत्रिगर्त्तनेतुर्दृढ
बंधनाय ॥ कोदंडयुक्तोगुणएवतत्रकर्त्ताचजज्ञेकरणंचजज्ञे ॥ १०४ ॥ तस्यांनिशायांतुतमः कदंबकंनिमीलनोन्मीलनयोर्दशांयथा ॥
युद्धंतयोर्मात्स्यसुशर्मणोस्तथासमानरूपंफलमेवसंदधौ ॥ १०५ ॥ विमानितोवायुभुवाविराटतोविमोचितोधर्मभुवादयालुना ॥
तयारजन्येवससामिशेषयासमंध्वजिन्यानिरगाद्यथागतं ॥ १०६ ॥ व्याकृत्तशीर्षैकरकोविमलास्थिदंतोरक्तन्हदांशुकधरोरथकेतुदं

१ संवर्तसमवर्तीप्रलयकालिकोयमः २ मत्स्यचक्रवर्तिनं विराटं महामत्स्यंच ३ मिषत्सु अवलोकयत्सु ४ गुणः सूदः भीमः मौर्वीच ५ सामिअर्धं
६ करकः कमंडलुः.

नंदनः ॥ नृपात्मजंपूजयितुंचमस्तकंनितांबिनीर्हासयितुंचकंचुकं ॥ ११ ॥ षंढोऽपितेजसातत्रसारथ्यसदृशाकृतिः ॥ नकासांपौरदृ
ष्टीनांचकासामासफाल्गुनः ॥ १२ ॥ नंसारथिपदेकृत्वासधातारमिवेश्वरः ॥ परसेनांहसन्नेवप्रधक्ष्यामीत्यमन्यत ॥ १३ ॥ मा
लिनीतादृशः पत्युर्महांतंनंरणोद्यमं ॥ श्यामाकचरुनिर्वापंजज्ञेसोमायवाजिने ॥ १४ ॥ अकृत्रिमाण्यद्यवशेकुरूणांपांडुस्नुषाया
वसनानिसंति ॥ आत्दृत्यनस्तानिदिशेनिकन्यास्तमभ्ययाचंतकुतूहलिन्यः ॥ १५ ॥ गद्यं ॥ तत्क्षणंयातायातसरभसराजलेखवा
हमुखश्रुतवल्लभुजलताबलावलेपवृत्तांतमोदमानसूदकुलंवीरपत्नीवीरजननीतियुगपत्प्रसिद्धेर्वैजननोवासरोयमितिकात्याय
नीजनस्तूयमानमुधेष्णंमस्तकतलाविन्यस्तहस्तपल्लवतल्लजवृद्धवल्लवयोपिदभययाचनवचनप्रतिशब्ददानदक्षगवाक्षोपलक्षितं
कुमारप्रयाणकालपरिहार्यमाणमातुलशनानंः पुरवधूटीनवविलापघोषंनत्पुरमासीत् ॥ पद्यं ॥ लाजाभिवर्षीललनासमाजोरा
ज्ञः कुमारायरयास्थिताय ॥ मुदाऽशिषंमूल्यमिवव्यनानीज्जिघृक्षितानांद्विषदंशुकानां ॥ १६ ॥ आलेख्यदत्तैः पुरुषैरूपेनामालो

१ सोमंवाजिनेश्यामाकचरुनिर्वपणंक्लैव्यनाशकमितिश्रुत्याभिप्रायेणरूपकं २ कात्यायनीजनः अर्धवृध्दस्त्रीजनः.

भ्योघोषोयत्नलेशंविनैव ॥ ३ ॥ इतस्ततः संभ्रममीयुषिणांगोपांगनानांकुचदर्शनेन ॥ निषादपंक्तिर्निजहस्तिमस्तेसृणिंविधातुं
श्लथपाणिरासीत् ॥ ४ ॥ भीमसेनाभिषजाशामितोयोदक्षिणेझटितिनस्यपुरस्य ॥ उत्तरेप्युदभवत्सतुपार्श्वेपक्षघातइवकौरवबाधः
॥ ५ ॥ वृत्तांनिवेदयितुमेतदतीववेगादाधाव्यकश्चिदथगोपयुवाविषण्णः ॥ रिंखत्पदाः[2] क्षितिपतेरिवघोषसीम्निस्वस्यापिगा[3]वि
मुमुचेनृपसूनुगोष्ठ्यां ॥ ६ ॥ औदास्यंकिमिदंकुमारकुरवोगृण्हंतिगास्तेखिलास्त्वद्दोष्णोः समयोयमाजिषुपरैर्दुष्प्रापमाप्तुंय
शः ॥ देवींकेकयनंदिनींकरुमहावीरप्रसूमूर्द्धसुद्रागारोहरथंगृहाणचधनुर्धत्स्वाभ्यमित्रीणतां ॥ ७ ॥ उक्तोज्यमित्थंपुरतोवधूना
मुल्लासयन्श्मश्रुलवान्नखाग्रैः ॥ किंचिन्मणिस्तंभवियोजितांगोगिरंदधेंतः पुरमात्रधीरः ॥ ८ ॥ तथाभुजंविक्रमयेयमेतंयंताय
दिस्यादिहमेयुयुत्सोः ॥ षष्ठोप्ययंकश्चनपांडवोभूदितित्रसेयुः कुरवोयथाते ॥ ९ ॥ इदंनिशम्यस्मितलांछितोष्ठयातत्रोत्तराकेश
कृताप्रणुन्ना ॥ वृहन्नलांसारथिकृत्यदक्षांभ्रात्रेनिवेद्यानयनिस्मचैनां ॥ १० ॥ अवाप्यनामंसदमादतः क्रमादवाग्बभारद्वयमिंद्र

१ घोषः व्रजः शब्दश्च २ पदानि चरणाः शब्दाश्च ३ गाः धेनूः भाषणानिच ४ अभ्यमित्रीणतां एकाकित्वेनजेतृत्वं.

पुरंप्रतिपलायमानोऽयमुत्तरः पश्चादनुधाव्यकचेषुगृहीतवतेफल्गुनायफल्गुनाकंठरवेणप्राक्तनाचित्रामिवप्रमुषितार्द्धवर्णवचनमेव
मवादीत् ॥ पद्यं ॥ किंवाचिकीर्षुरसिहंतबृहन्नलेत्वमक्ष्णोर्नमांतिकुरुराजबलान्यमूनि ॥ सद्योनिवर्तयरथंसमरेच्छयाऽलंनेष्या
म्यहंनिजगृहेष्ववशेषमायुः ॥ २३ ॥ गाः कालयंतुसहवत्सकुलैरशेषैर्घोषान्दहंतुकुरवः प्रहरंतुगोपान् ॥ मह्यंपलायनमहोत्स
वमेवदेहिप्राणेषुकिंचिदपिमेगुरुतांनवेत्सि ॥ २४ ॥ मातुर्मुखंममपुरः पुरएवनिष्ठत्युत्कंठितस्यनयतत्सविधंकृपालो ॥ यावंति
संतिममकोशगृहेसवित्रीतावद्भिरेवकनकैरभिषेक्ष्यनित्वां ॥ २५ ॥ चित्रेयुद्धंविलोक्याहंचापलादेत्यवंचितः ॥ तत्रासाद्भिरिहोग्र
द्भिः क्ष्वेलाहेषितबृंहितैः ॥ २६ ॥ यथाऽहंभूतलंत्यक्त्वारथमारूक्षमुच्छ्रितं ॥ तथात्वदंनरंत्यक्त्वाकंठंप्राणोधिरोहति ॥ २७ ॥
॥ गद्यं ॥ इतिबहुधाविलप्यपादयोः प्रणिपतंतंतंनृपसुनमपरांगेकरपुटेनमुहुरास्फालयन्मस्मितंगिरममराधिपसुनोपिप्रवर्त्तयामा
स ॥ पद्यं ॥ उदितोऽसिविराटभूपतेरुदराद्रद्रकथंत्वमीदृशः ॥ प्रवयाअपियः कुतूहलात्परसैन्यैरधुनापियुध्यते ॥ २८ ॥ सार

१ वर्णं अक्षरं शुक्लादिवर्णश्च.

कयन्राजपथप्रतोलीं ॥ घोटान्नुदंतींसिरथेनिबद्धान्पोटांपुरस्कृत्यपुरात्प्रनस्थे ॥ १७ ॥ गद्यं ॥ तदनुदक्षिणदिङ्मुखादुदयमानः
पवमानोवृंदारकवृंदमुक्तमंदारकुसुमवर्षमंदायितधूमगंधंवल्लचिकुरबंधमाघ्रायानिशितस्यजयोत्सवंविजयाय विज्ञापयितुमवस
रंविचिन्वन्निवविराटकुरुनंदनयोः स्यंदनसमीपेमंदमंदमस्पंदत ॥ पद्यं ॥ प्रस्वापितेभ्यः परभूपतिभ्यः सजातिवर्गः सुलभो
रणेस्मिन् ॥ भविष्यतीतिप्रणनर्त्तत्दृष्टाशतांगशाटीशतमन्युमूनोः ॥ १८ ॥ जलेमत्स्यान्दधानोपिस्थलेमत्स्यान्विलोकितुं ॥ आ
गतोऽब्धिर्धारिवानीकः करूणांददृशेततः ॥ १९ ॥ मेहेजिष्णुर्नतत्रारेः सेनाधूलिंविसृत्वरीं ॥ प्रायेणमानिनापुंमापेरागोनाहिमह्य
ते ॥ २० ॥ तत्रारिसैन्यमवलोकितुरुत्तरस्यस्त्रीगोष्ठिकाऽजनिरणेनिजवेश्मनीव ॥ भीश्चित्तमश्रुलहरीनयनंविमूर्च्छांबुद्धिंप्रवेप
थुरुजावपुरानशेयत् ॥ २१ ॥ व्यातन्वन्कौरवंगलेविरचयंस्तालुन्यपांशोपणंवृष्टीरक्ष्णिविवर्धयन्विपुलयन्द्यांधार्त्तराष्ट्रारवैः ॥
सेवायांत्वरयन्धनंजयपदस्यांतर्बहिः कंपयन्त्रासोमात्स्यसुतेचकारचरितंषण्णामृतूनांक्रमात् ॥ २२ ॥ गद्यं ॥ अथरथादवप्लुत्य

१ पोटां स्त्रीपुंसलक्षणां २ परागोधूलिः शत्रुकृतापराधश्च ३ कुरवं कुशब्दं कुरवकंच ४ धार्तराष्ट्राः दुर्योधनादयः हंसाश्च ५ धनंजयः अर्जुनः अग्निश्च.

मिवंतीदृशी ॥ पार्वत्यानिजवस्त्रपट्टशकलैःस्नेहद्रयाद्रैस्वयंन्यस्यन्यस्यचिकित्सितव्रणशिरादेवोपियंश्लाघते ॥ ३४ ॥ नभसिप्र
विसारिदेवदत्तेनरदत्तध्वनितंतनोदधाने ॥ मुमुहुर्द्विरदामुमूर्छुरश्वारथिनश्चुक्षुभिरेभटाश्चबिभ्युः ॥ ३५ ॥ पर्यायेणास्यगांडिवः
पातितज्यः प्रकोष्ठयोः ॥ गंधर्वयुद्धमारभ्यकृतंमौनंसमापयत् ॥ ३६ ॥ गद्यं ॥ अथकरतलद्वयमंडपकृततांडवस्यगांडिवस्याव
स्फारेणपार्थोयमितिनिश्चित्यलीलानिस्तीर्णदुस्तरमंधासिंधुरयंपुनरपिनिर्बंधुमागतइत्यधृष्ययानिजेर्ष्ययारूक्षाविपक्षाः पूर्वपक्षाः
सिद्धांतमिवयुद्धायनंपर्यवारयन् ॥ पद्यं ॥ विजयस्यरथेनतोनिपेतुर्विमनानामिपवः परः सहस्राः ॥ जनमेजययागवेदिमध्येजग
तांभीतिकराइवाहिसंघाः ॥ ३७ ॥ जंभद्विषोपिननयोजगदेकवीरोजन्यंसमारभनजृंभयितुंस्ववीर्यं ॥ प्रत्यर्थिरक्ततटिनीस्नपनैः
शराणांभेत्स्यन्निवाथपितृकाननवासदोषं ॥ ३८ ॥ चलदश्वरथद्विपोत्थरेणून्वरणस्त्रहृन्मधुभिः प्रणीयशांतिं ॥ सुखदृष्टरणायथाभ
वेयुः सुरवामांगगनेनथासमीयुः ॥ ३९ ॥ कौंतेयकर्णद्वितयोपकंठमौहूर्त्तिकावेदिनजैत्रयात्रैः ॥ आशातशल्यैरुरुधेऽथभल्लैराशा

१ स्नेहः तैलं प्रीतिश्च २ निर्बंधुं निरांधुं.

यौगतभयेऽपिरथीत्वंसंगरेयदिबिभेषिरिपुभ्यः ॥ मत्स्यकेकयभुवांबलभाजांमानवर्त्तनमितोपिपुनः किं ॥ २९ ॥ विस्तीर्यसंसादि
विशृंखलवीरवादंयुद्धात्पलायिनवतोऽद्यनवांगकंपः ॥ अंतः पुरेषुहृमनामवलाजनानामाचार्यएवभविनाकुचवल्गितानां ॥३०॥
कियद्विषामंशुकमाहृतंतेसहोदरेणेनिसखीभिरुक्ते ॥ मानोत्तरायाभृशमुत्तरायाः किमुत्तरंब्रूहितदुत्तरत्वं ॥ ३१ ॥ जरठोजनको
ऽपिमातुलाः शतमप्यंतमगुस्त्वमेककः ॥ यदियासिनधैर्यमत्रतेनवशोराष्ट्रमिदंभविष्यति ॥ ३२ ॥ तदिदंविजहीहिसाध्वसंकुरु
पाणौतृ[1]णतांकुरुष्वापि ॥ तवमत्स्य[2]पतेस्तुवा[3]हिनीमुखभागेखलुवल्गनंक्षमं ॥ ३३ ॥ गद्यं ॥ इत्याश्वास्यापिनृवनात्र्वीतटमुपेत्यश
मीविटपिकोटिसमाटीकितकिरीटशंखचापनिषंगोजयलक्ष्मीपरिणयनयोग्यतांसंपादयितुमिवखंडितषंढभावोऽयमाखंडलसुतो
निजतत्वव्याकरणाच्छतधापल्लवितधार्ष्ट्र्येनेतेनैवसुधेष्णापत्येनपरिकल्पितसारथिशिल्पंरथमारुह्यक्षणेनवारिनिधिपूरस्यवडवान
ल्हिरिवसपत्नसैन्यस्यसंमुखीनोबभूव ॥ पद्यं ॥ संख्यातीतमवेक्ष्यकौरवबलंतत्सव्यसाचीपुनश्चापेनादृशिकिंचिदेषविदधेमाचौ

१ तृणतां धनुः तृणत्वंच २ मत्स्यपतेः मत्स्यदेश राजस्यपक्षे महामत्स्यस्य ३ वाहिनी सेना नदीच.

येगांधारनाथेपुनर्निर्गंतुंधृतदिक्भ्रमेविगलितच्छत्रेऽपिदुर्योधने ॥ द्रोणेऽपिक्षपितध्वजेकृतधनुर्भंगेऽपितस्यात्मजेमूर्छालेसरितः
सुतेपियुधिसामम्लेकुरूणांचमूः ॥ ४८ ॥ वीणामुनींद्रोविजयस्ययुद्धंनीरंध्रभावेनानिरीक्षमाणः ॥ आनंदजैरश्रुभिरेवचक्रेहस्नापि
नैरान्हिककृत्यमभ्रे ॥ ४९ ॥ विस्मयार्णवविभावरीविभुंवीक्ष्यवीक्ष्यविजयस्यविक्रमं ॥ उत्तमांगमखिलाप्सरोगणैर्ह्रर्वशनिभासि
साप्यकंपयत् ॥ ५० ॥ वपुरस्त्रमात्कृतवतांसुभटानांवरणस्रजेविबुधवारवधूभ्यः ॥ कुसुमात्ययेसतिदलान्यपिदत्वाक्षुपतामवा
पकुलिशायुधशाखी ॥ ५१ ॥ वाव्होः प्रवृष्ट कुसुमस्यततोनिलिंपैः प्रस्वापनास्त्रमहिमाऽतिशयेनतस्य ॥ निद्रायतेस्मनिखिला
पृतनारिपूणांयुद्धावतीर्णमपनेतुमिवश्रमंस्वं ॥ ५२ ॥ गद्यं ॥ ततः सर्ववित्सुः परिषत्समानीतनिजवधूपारिभवानुरूपफलंप्रदित्सयेव
सारथिनाद्विषतामपहारितनाविविधपरिधानोगुरुप्रभृतिपुदिवास्वापोमाभूदितिकृपयामन्यमानइवपुनरपितदस्त्रंक्षणादेवसंजहार॥
॥ पद्यं ॥ अथदृशः परिमृज्यकरांचलैरहणिताः परिमीलनमुद्रया ॥ प्रकाटितास्याबिलैः परिजृंभणात्प्रबुबुधेकुरुराजचमूचरैः ॥

१ विभावरीविभुं चंद्रं वर्धकामित्यर्थः २ ध्रुपतां पुष्पपर्णराहित्यं ३ नभस्वरूपंफलं.

कुबेरस्यचवैरिणांच ॥ ४० ॥ उद्धारसंधिपरिमुक्तिषुमार्गणानामाद्येउभेअपितदानिमृपुक्रियासु ॥ सायुज्यमापतुरिवांतिमयासमोर्कि
चक्रीकृतेधनुषिशक्रसुतेनतेन ॥ ४१ ॥ युद्धसीम्निभुजगर्विणांद्विषामुच्छिनान्कटकनिःसृतांभसः ॥ तत्रलक्ष्यमकरोत्सकुंजरांस्त
स्यतातइवशैलसंचयान् ॥ ४२ ॥ कांडैरपातयदधः करिमंडलानांशुंडाः प्रचंडतरदोर्युधिपांडुसूनुः ॥ निद्रास्यनांनिखिलवैरिम
हीपतीनामुत्पादयन्निवपृथूरुपधानपंक्तीः ॥ ४३ ॥ विशालरंध्रंविजयास्त्रदत्तंदेहस्वमध्येदधनोमहांतः ॥ स्कंदस्यशक्त्याक्षतमेख
लस्यक्रौंचस्यलीलांकरिणोविवव्रुः ॥ ४४ ॥ आधोरणस्यशिरसापनतार्द्धमार्गेमंधानभार्जि दवमुत्पतितेनेकवंधे ॥ न्यस्यस्वजंसुरव
धूरथबद्धमौबात्तस्माद्भयाद्दिविपलायतदूरमेका ॥ ४५ ॥ तुंगागजाश्वजवनास्तुरगाश्ववीरायोधाश्वनेननिहताभुवमाशुजग्मुः ॥
निद्रास्यतोनिबिडमत्रनरेंद्रसंघान्प्रागेवसम्यगवकाशजिघृक्षयेव ॥ ४६ ॥ गंगांसितांरविसुतामामितांपिशंगींचक्रेतयोः सहच
रींचपुराविरिंचिः ॥ शोणाकृतानतटिनीतिकिलार्जुनेनबाणालिभिः शतमसृक्सरितांवितेने ॥ ४७ ॥ कर्णक्केनिगवेषणस्यविष

१ कटकः गजगंडः अद्रिनितंबश्च २ दोः बाहुः ३ न्यस्य नवसुरभ्रांत्याक्षिप्त्वा.

र्याऽस्वरथेपटानां ॥ ५८ ॥ बधानधैर्यैवदबंधुगोष्ठ्यामात्मानमेवारिजियस्यहेतुं ॥ मातुः पितुर्वाधुरिमंत्रिणांवामोतत्वगंधंममसूचयेति ॥ ५९ ॥ गद्यं ॥ अथतथेत्यभ्युपगम्यक्षतजपंकारुणितनेमिरेखैर्द्विषदौत्पातिकालातचक्रैरिवपारिभ्रमद्भिश्चक्रैः संक्रीडताशतांगेनपरिगच्छन्नग्रेसरगोघटाखुरपुटकुट्टनत्रुटितधरणीतलोच्चलितरजोभाराक्रमणाविनम्रीभूतपक्ष्मणाऽपिकुरुभटजैत्रोऽयामिति विस्मयबलविस्तारितेनचक्षुषावृहन्नलामप्यनादृत्यमुहुर्मुहुरापिबद्भिः पौरैरनुगम्यमानोयमुत्तरोनलकूबरोऽलकामिवस्वांपुरींप्रविश्यपरस्परोपमर्दनद्विगुणितबंदिवादित्रघोषेणमहनाराजमार्गेणपितुः सभामभिजगाम ॥ पद्यं ॥ तान्येवपुष्पाणिनएवधूपास्तेकेतवस्तेमणितोरणांकाः ॥ पुत्रस्यतस्यापिपुरोपचाराबभूवुरग्रेजयिनः पितुर्ये ॥ ६० ॥ नदावनींद्रः प्रणतंकुमारमस्त्रैर्द्वयैरार्द्रतनुत्रमार्जौ ॥ दोर्भ्यांद्विषद्बंधनखेदभाग्भ्यामपिप्रमोदादृढमालिलिंग ॥ ६१ ॥ पार्थोप्युपानीयरथस्यगर्भात्पार्श्वेस्थितायैपितुरुत्तरायै ॥ दिदेश

७०

१ युष्मदस्मद्वाचकोत्रात्मशब्दः २ मा तत्वगंधं पक्षे माअतत्वगंधं ३ औत्पातिकालातचक्रैः उत्पातसूचकोल्मुकचक्रैः ४ नलकूबरः कुबेरः ५ अलकां कुबेरपुरं.

॥ ५३ ॥ पूर्वप्रयोगमुदिताइवतस्यबाणानिद्रांद्विपत्सुनिखिलादर्दुरेवदीर्घां ॥ पश्चात्प्रयुक्तममुनाऽहमितीविशेषात्प्रस्वापनंतुवि
ततारनतादृशींतां ॥ ५४ ॥ सतुवपुरनुशोच्यधार्तराष्ट्रः समितिविराटसुतापनीतचैलं ॥ कुलिशभृदनुजीविदत्तबंधांकुशलममन्यतघोषवाटयात्रां ॥ ५५ ॥ पराञ्चिकर्तुंवदनान्यनीशाः पश्चाद्विमर्देननभस्यमर्यः ॥ निरीक्ष्यनग्नान्नृपतीन्ह्रियार्त्तानिमीलनाज्ञंनयनंनिनिंदुः[1] ॥ ५६ ॥ इतिपरिभवलक्ष्म्यामंभृतांभोगमुद्रांतनुभिरभिदधानास्थास्नुभिर्नग्नभावे ॥ ध्वजपटशकलाग्रैः क्लृप्तकौपीनकृत्याः सुबलदुहितृपुत्राः स्वांपुरींप्रत्यगच्छन् ॥ ५७ ॥ गद्यं ॥ तदनुहरिदंगणविशृंखलाविश्रमितविजयशंखरवोनिजायुधनिक्षेपरक्षिषुभूतकुटुंबकेषुनवसमररुधिरांजलिपानपरितृप्तिकिलकिलितमनुभवितुकामइवपुनरपिपितृवनमेत्यतरुनिहितशस्त्रसंभारः पुरात्सहायातेषुगुणेषुआवामेवनवरणाद्भुतदर्शनंप्रतिवांचिनेइति उपालब्धुमिव[2]भूयोपिक्लैब्यसारथ्याभ्यांकृतानुषंजनः कुरुकुंजरोभूमिंजयमेवंजगाद ॥ पद्यं ॥ कुमारकोशीकुरुकेशपाशंमुखेऽश्रुणामार्जयपातमार्गं ॥ तूण्यासमंदोर्ण्णिनिधेहिचापंराशोरुप

१ निमीलनाज्ञं अनिमिषत्वात् निमीलनाशक्तं २ उपालब्धुं निंदितुं.

मांपुरीं ॥६९॥ गद्यं ॥ इतितादृशींतस्यवचनचातुरींनिशम्यदुरोदरप्रहारवेदनामप्यविगणय्यतरलितेन शिरसाश्लाघमानेयतींद्रेवा
सरविरामशंसिनंयामशंखरवमाकर्ण्ययथोचितंसभास्तारान्विमृज्यमेदिनीपतिर्मोदेनमुधेष्णाप्रासादमाससाद ॥ पद्यं ॥ सुताव
लोकेननरेंद्रसुभ्रुवश्च्युताखिलाश्रुष्वपिमोदरात्ययान् ॥ विलोचनांगेष्वतिवृष्टिसंपदेविभांडकापत्यविजृंभणायितं ॥ ७० ॥
॥ गद्यं ॥ अन्येद्युरात्मजमुखादमीषांयाथार्थ्यमवगम्यचकितचकितः कुटुंबेनसहसचिवान्पुरस्कृत्यसभामागतोविराटोनामांतर
सीन्नधानादिवहायनमेकमनुपसर्पद्भिः स्वैस्वैर्वेषैः प्रत्यासन्नेनसोदर्यजनेनसमुपास्यमानस्ययुधिष्ठिरस्यचरणनलिनयोः पलि
तंभावुकेनमौलिनामरालयुवकेलिमुल्लल्लयांचकार ॥ पद्यं ॥ तदानुनोदस्मितपांडुरिम्णातपः सुनोऽक्षक्षतिहेतुमुग्रं ॥ महेंद्रसूनो
र्दृशिशोणिमानंमात्स्यस्यचित्तेपिचनीलिमानं ॥ ७१ ॥ मात्स्यस्ततः प्रमुदितोमहितेऽन्हिकन्यांशौरींसमेयुषिसहाखिलबंधुवर्गैः ॥
मृद्वींशिरीषकुसुमादपिपार्थसूनोः सीमाशिलामननुतप्रथमाश्रमस्य ॥ ७२ ॥ तथोपचारंविदधेसुधेष्णाजानिः सपार्थेषुसमाधवेषु ॥ त

१ विलोचनेएवांगदेशाः तेषु २ विभांडकापत्यं ऋष्यशृंगः अंगदेशेषु ऋष्यशृंगागमनं वृष्टिजनकमासीदिति कथा प्रसिद्धा.

71

पट्टांशुकमात्मसूनोः पाणिग्रहार्थंकिलमंत्रवासः ॥ ६२ ॥ आचेटमन्यमखिलंपटमामुधेऽगमंतः पुरायसाविभज्यददौकुमारः ॥
सैरंध्रयेनतुमलीमसवाससेपिसंचिंत्यतांबहुपटप्रभवावलग्नां ॥ ६३ ॥ विनार्जुनंपांडुसुतान्समाजेविस्मित्याविस्मित्याविलोकमा
नं ॥ जिघ्रन्विराटश्चिकुरेषुसूनुंजगादविन्यस्यनिजासनार्धे ॥ ६४ ॥ निपात्यपार्थान्कांतारेनिः सपत्नत्वमीयुषां ॥ कंठेगलूयसे
वत्सकौरवाणांत्वमेककः ॥ ६५ ॥ नव्यंगुरुंभुविनमार्गितुमुत्तरायाः संरक्ष्यसूतमपितादृशिसंप्रहारे ॥ जन्मर्क्षजीवदिनयोगफलं[1]
चदातुंकन्यासुवत्सकथमेत्यकुरून्व्यजेष्ठाः ॥ ६६ ॥ गद्यं ॥ इतितत्रप्रमोदचंचलेनपाणिनापराम्हृश्यचरमांगंपुनः पुनरनुयुंजा
नायतातायसौधेष्णेयोपित्रपाप्रवाहाभिमुखमवस्थातुमपारयन्निवविनम्रीभूतकंधरोगिरमेवंविज्ञापयांमास ॥ पद्यं ॥ रोदः[2] प्रसा
रिध्वनितंमयाचक्रेधुरिद्विषां ॥ यावान्मेवेगसन्नाहस्तावांस्तत्रप्रदर्शितः ॥ ६७ ॥ अहमेकोरणेतस्मिन्नपरैरननुष्ठितां ॥ रथिसा
रथिपत्तित्वेरचयामिस्मकर्तृतां ॥ ६८ ॥ देवकिंबहुना ॥ अपार्थ[3]कर्ममेनासीदाहवेयदारातिषु ॥ पुरंतोविजयमाधायपुनरागामि

१ जन्मनक्षत्रं गुरुवारश्च तयोर्योगफलं वस्त्रप्राप्तिं २ रोदः प्रसारि द्यावापृथिवीव्यापकं ३ अपार्थं व्यर्थं अर्जुन रहितंच.

दीयांयतित्वबुद्धिंत्दादिकुर्वतीनां ॥ गवाक्षमार्गैः कृतवीक्षणानांस्त्रीणांमुखेंदोः स्मितचांद्रिकाऽभून् ॥ ६ ॥ दौवारिकैस्तत्रसद
चमार्गोनिद्रायमाणस्यानिकेनमध्ये ॥ शौरेरुपायाच्चरणोपधानंतत्स्यंदिसिंधुच्युतकूर्मशोभं ॥ ७ ॥ यस्याधिमौलिसविधंप्रथमंसमे
त्यतिष्ठन्कुरूद्वहसुतोयुधिसाह्यमर्थी ॥ रेजेपरीक्षितुमिवोत्सुकतांदधानस्तत्कुंतलेनिजमनस्यपिवाक्रिम्याणं ॥ ८ ॥ निमीलनालिं
गितनेत्रयुग्मोनिष्पंददेहोनितरांवभौयः ॥ स्वध्यानशैलीसुखमास्थितानांतपस्विनांसंघमिवानुकुर्वन् ॥ ९ ॥ देवीकुचाद्रिहृरुचे
घुसृणेनक्लृप्तः सक्तः कपोलफलकेमकरोयदीये ॥ मीनध्वजारिजयिनेविजयायसिद्धिंविश्राणयेतिनिगदन्निवकर्णमूले ॥ १० ॥
पाश्चात्यपाथोनिधिपार्श्वभागेसंपूर्यकुक्षिंसलिलस्यपूरैः ॥ मजातियूथाद्युनिमाश्रितस्यक्रमंदधौयोघनशावकस्य ॥ ११ ॥ गद्यं ॥ ततः
प्रबुद्धेनतेनदेवेनतयोः प्रथमागमनदर्शनाभ्यां कृत्यसाम्यंत्व दिकृत्यरणांगणेगृहीतहेतीनांनवकोटिसंख्यावतांगोपकुमाराणांकदं
बेनकेनापिदर्शनकेवलसान्निधानेनस्वेनापिकेनचिदंशेनपरिपूरितमनोरथौसुयोधनधनंजयौस्वावासकटकभुवमासेदतुः ॥ पद्य ॥

१ घुसृणेन काश्मीरजन्मना केशरेतिप्रसिद्धं. —

मेवगांधारपतिंयथातेजानीयुरत्यंतकृतोपकारं ॥ ७३ ॥ अथोल्लास्यकुरूनेतान्हरिर्मात्स्यपुराद्ययौ ॥ मंदारप्रमुखान्कल्पान्वसंतइववनं
दनात् ॥ ७४ ॥ ॥ इत्यनंभट्टकविकृतौचंपूभारतेसप्तमस्तबकः ॥ ॥ तावत्पांडुसुतेनकौतुकवताकर्तुंप्रकोष्ठांगणेज्यामेकांयु
धिनर्तकींभुजभुविस्थास्नुंचिरस्यापरां ॥ आहूताः क्षितिपाविराटनगरींसैन्यद्विपैर्हन्मदैः प्रावृड्वासरसंचयाइवघनैः प्रापुर्महा
द्रेस्तटीं ॥ १ ॥ सेनानांयावतीः पार्थोयुद्धायाक्षौहिणीर्दधौ ॥ धार्तराष्ट्रश्चतस्रभिस्तावतीराधिकाः पुनः ॥ २ ॥ उक्ताध्ववृत्तांतमु
वाचशल्यंपार्थस्ततोभानुसुतस्ययुद्धे ॥ आक्षेपवाचात्हृदयंवितक्षन्नन्वर्थतामाचरमातुलेति ॥ ३ ॥ अथभागिनेयवत्सलतयासत्य
संगरस्तथेतिप्रतिश्रुत्य ॥ मद्रायतवमांविद्धिनिद्रामुचमितिब्रुवन् ॥ मद्राधिपोययौपार्थात्सद्राग्दुर्योधनांतिकं ॥ ४ ॥ ततः ॥
साह्वाययुद्धेसरसीरुहाक्षंवरीतुकामस्यबलारिसूनुः ॥ अजातशत्रोरवतंसयन्गांतुंगध्वजांद्वारवतीमियासीत् ॥ ५ ॥ गद्यं ॥
तत्रचिरदृष्टस्यकुंजरकुमारकोमलचंक्रमविलासस्यतस्यविलोकनायवीथीवीथीपुजनाः संघीबभूवुः ॥ पद्यं ॥ हेतुंसुभद्राहरणेत

१ ज्यां मौर्वीं पृथिवींच २ अन्वर्थतां शल्येति.

त्रमेतत् ॥ १६ ॥ गलत्समीरैर्गजकर्णनालैर्नटत्पटेभ्योनगरध्वजेभ्यः ॥ तनूरिदानींममतांनकांतिराकंपनाम्नायमसावधीते ॥ १७ ॥



आनंदयित्रीमखिलस्यजंतोरंतः क्षेमां स्वामपहायमोहात् ॥ बंधुप्रणाशाद्बहुदुः खदोग्ध्र्यैबाहिः क्षमायैस्पृहयामिधिङ्मां ॥ १८ ॥



गतिर्नमेऽन्यागरुडध्वजत्वया विनाधुनास्याविपदो विधूतये ॥ वनानलार्चिर्वलयावृतिस्थितेर्बलौहकात्किंशरणंमृगीशिशोः ॥ १९ ॥ बहुभिः किमिहापरैः प्रलपैर्वहिरंतश्चवदामितुल्यभावः ॥ कुंकुराधिपबंधुभिर्ममस्वैः कुरुसंधिकुरुवंशभूतयेत्वं ॥ २० ॥ इतिब्रुवंतंयदुनायकोऽब्रवीत्युधिष्ठिरंयोगिविचिंत्यवैभवः ॥ महीपतेयद्भवतासमीरितंमहात्मनांयुक्तमिदंभवादृशां ॥ २१ ॥ सरिदात्मजशासितोपिसन्मदुरध्वंनजहातिकौरवः ॥ इतिचिंतयतोममाधुनात्वदादिसिद्धिः खलुसंशयेशया ॥ २२ ॥ प्रयतेतथापिनृपसंधिमिद्धयेप्रयतेंद्रियैर्भुविपणायितस्यते ॥ फलतिक्कचिन्नफलतिक्कचिक्रियाप्रविधातुरेषनहिदोषसीकरः ॥ २३ ॥ इत्थांनिगद्यमधुरस्मितमीक्षमाणोभीमस्यवक्त्रमपिदारुकनीनमग्रे ॥ आरुह्यरत्नरथमाश्रितरंक्षलीलाकूलंकषोहरिरगात्कुराजधानीं



१ तांता म्लाना २ क्षमां शांतिं पृथिवींच ३ बलाहकात् मेघात् ४ कुकुराः यादवाः ५ पणायितस्य स्तुतस्य ६ कूलंकषः पूर्णः.

सेनागजेंद्रमदसौरभवीचिवेगानिर्धूतगोग्रहरणसंयुगपूतिगंधं ॥ संवीक्ष्यमत्स्यवसुधेंद्रपुरोपकंठंशौरिश्वशाक्रतनयश्चननंदतुस्तौ ॥ १२ ॥ दृष्ट्वानिवृत्यवदतोयुधिपांडवानामुत्साहमुग्रमथसंजयतोनिशम्य ॥ वातैर्विनापिमणिसौधतलेनिवासंकुर्वन्नकंपतभृशं कुरुवंशकेतुः ॥ १३ ॥ पांडोः सुतायवसुधांप्रविभज्यदित्सोः प्रज्ञादृशोरहसिसात्वपथोपदिष्टं ॥ दुर्योधनस्तुवचनंनचकारकर्णे कर्णस्वमेववचनंमधुरंचकार ॥ १४ ॥ गद्यं ॥ तदनुदिनेदिनेसमुपचीयमाननानाविधनरपतिकुलचतुरंगबलकलकलानप्यभिभवद्भिः कंककाकसालावृकजंबूककदंबकराटितैः कटूकृतनिकटयोः कुरुविराटपुटभेदनयोः कतिपयैर्दिनैरेवपंचखलुवीराः पौरवसाम्राज्यलक्ष्मीमभिवीक्ष्यस्थातुमवशिष्यैरन्निितिकिंवदंत्यांप्रवहंत्यांसत्यांक्षितिपतिः क्षीणधैर्योदीनाक्षरः सहोदरसमक्षंसरोरुहाक्षमेवंव्याचचक्षे ॥ पद्यं ॥ एतावतोबंधुजनान्निहत्यकिंलब्धयाकृष्णभुवाऽधुनामे ॥ सकंदमूलानिसनिर्झराणिनकिंममाद्यापिवनानितानि ॥ १५ ॥ संतापकालेसतिघर्ममंभः पतत्यधस्तादितिहिप्रसिद्धिः ॥ जिव्हांविहायाद्यजलंमुहुर्मेदृष्टिंसमारोहतिचि

१ सालावृकाः श्वानः.

नगरभुवः स्पर्शनंपरिहर्तुमिवसाविनयमुपागतेनदारुकेणसंयोजितमणिपादुकः किंचिदेवनमितपूर्वकायेणविदुरेणावितीर्यमाणह
स्तावलंबो गुरुकल्पमुखैर्ब्रह्मसंघैः प्रतिपाद्यमानांजयाशिषंशिरसाप्रतिगृण्हानः कुशलप्रश्नकोरकितमोदाभ्यांकुरुराजदेवव्रता
भ्यांसदनाभिगमनायसंप्रार्थ्यमानश्चिरमवसरंप्रतिपालयतामक्षौहिणीपतीनामंजलिवनजावलिमवलोकनेनसंभावयमानोमु
कुंदोवंदिवृंदपरिपठ्यमानकंसादिवधविरुदावलिप्रबंधबंधुरेण मंगलकुसुमगंधसंपदंधीकृतपुष्पंधयझंकारसहचरवादित्रघोषेण
मेघवर्जमुन्मिषंतीभिः सौदामिनीभिरिवकनकवेत्रलताभिराकुलितेनमहताराजपथेनसुयोधनादिभिश्चतुर्भिरध्यासितपूर्वंसभामंड
पंशनैः शनैरवजगाहे ॥ पद्यं ॥ तत्रातितुंगेतरसोपनीतेरत्नासनेयंरचितोपवेशः ॥ पुरोहितैरग्रभुविप्रदत्तांपूजामुपादत्तपुमान्पुराणः
॥ २९ ॥ सभांतरेतत्रसमग्रकांतिंसंवीक्ष्यसंवीक्ष्यसरोरुहाक्षं ॥ नरेंद्रवर्जंनगरीजनेषुनकस्यवाभून्नयनप्रमोदः ॥३० ॥ भद्रासनादवनतं
पदपल्लवाग्रंसंवाहयत्युपगतेविदुरेदयार्द्रः ॥ सामाजिकेबुधजनेसतिदत्तकर्णेप्रह्लादशांगिरमभाषतपद्मनाभः ॥३१॥ अल्पैरहोभिरधि

१ नरेंद्रवर्जं धृतराष्ट्रवर्जं अंधत्वात् तस्यैव केवलं नेत्रानंदोनबभूवेतिभावः.

॥ २४ ॥ अवलोकयन्नथपुरप्रतोलिकामनिमेषंपौरजनतानिरंतरां ॥ मृदुरानतेषुसदुरासदः परैर्यदुराजएषविदुरालयंययौ ॥ २५ ॥
तेमसांकुलानिसकलानिदर्शनेसतिसद्यएवशमयन्महामहाः ॥ सविवेशतत्रविदुरस्यमंदिरंचरमाद्रिकंदरमभीषुमानपि ॥ २६ ॥
कंसवैरिणिसमेयुषिगेहंक्षत्तुरातिशायितंमदनृत्यं ॥ संक्षयंगमयतिस्मपुरारेः साध्यनांडवविधेरवलेपं ॥ २७ ॥ विरतेरुचितंविशुद्धम
न्होविधिमाधायपितृष्वसुः सकाशे ॥ वसतोऽस्यनिशैवसासमाप्तोद्धसुदेवात्मभुवः कथानतास्नाः ॥ २८ ॥ गद्यं ॥ अपरेद्यु रखिलम
हारंभकृत्यमवसाय्यबालातपेनबलाहकइवघुसृणमसृणितेनपटीरपंकेनचर्चितकलेवरः पंकेरुहशांकिनीभिरंचललिखितराजहंस
राजिभिरवकृष्यमाणेनेवपीतांबरभागेनपरिचुंबितप्रपदपल्लवो निजोदरांतरानवकाशतयाबहि र्निर्गतैर्जगदंडशिशुभिरिवमुक्ताफ
लैः प्रत्युप्तमेखलामुखभागोवर्षाहेमंतसमययोरप्यविनश्वरंलक्ष्मीलीलाकमलमुपश्लोकयितुमागतेनदिनमणिबिंबेनेवकौस्तुभेनदे
दीप्यमानभुजांतरोदनुजपरिषदौत्पातिकरक्तपरिवेषेणेवपद्मरागकेयूरेणपरिमंडितबाहुदंडोद्द्वारि निर्गत्यसुयोधनदुर्वासितायाः

१ जनता [illegible]नसमूहः २ तमसां पापानां अंधकाराणांच ३ क्षत्तुः विदुरस्य ४ पितृष्वसुः कुंत्याः

मेव ॥ ३९ ॥ गद्यं ॥ इतिसिद्धांतवतिबद्धांजलौराजनिनिजासनार्द्धविनिवेशितकरतलतयाकिंचिदुन्नमितवामभुजाशिखरेणगं
डमंडलेनिमज्जितमकरकुंडलंकाटितटचलनकंदलितकांचनपटमर्मरमीषत्कंधरांविनिवर्त्य ॥ पद्यं ॥ कृप्तास्मितंरविभुवाकृतह
स्तनालंदुः शामनेनधुरिदूषितसांधिपक्षं ॥ कर्णोपकंठचलिताधरमातुलास्यंकौरव्यमाहकुरुसंसदिकंसवैरी ॥ ४० ॥ पृथासुतेभ्यः
पृथिवींनदीयांपुनर्दिशेतिब्रुवतोगुरोर्गीः ॥ अशृण्वत कौरवनेकथंवासंभूतिरेषाशशिनोन्ववाये ॥ ४१ ॥ तत्तादृशंशृणुमहत्त्ववं
शवृत्तंपूरुर्ददौनववयः पितुरात्तजीर्णः ॥ त्यक्त्वाश्रमांपितृमुदेतृणवद्द्वितीयंदेवव्रतोऽयमिहतिष्ठतिधीरधीरः ॥ ४२ ॥ कितवोक्तिभिः
किंसलितश्चकर्णयोः सफलोभवेत्तवतदामनोरथः ॥ हरिनंदनेनयुधिपातितंधनुर्हरमस्तकान्नपुनरुन्ममज्जचेत् ॥ ४३ ॥ वंश
कुरूणांमहितोयमस्मिन्धर्तुंकलंकंचतुरौखलुद्वौ ॥ एकत्रकोटौरजनेरधीशः परत्रमन्येपुरुषोभवांश्च ॥ ४४ ॥ गद्यं ॥ इतिगादि
तवतिभगवतिक्रोधनः सुयोधनोपिगिरमिमामुज्जगार ॥ अरेनंदनंदनकेवलंविराटतनयाश्रयलाभेनकृतकृत्यंमन्यानांकुंतीभुवां

१ आत्ताजीर्णा जरायेन २ कितवः अक्षविद्यानिपुणः शकुनिः ३ किसलितः संजातपलवः उत्पन्न इत्यर्थः.

युद्धमवेक्ष्यनंश्यच्चांद्रंकुलंतवसुतैः सहपांडवानां ॥ संधिंविधातुमधुनासमयेविधेयंप्राप्तोऽहमास्मिभरतर्षभतेसकाशं ॥ ३२ ॥
शतेनसंधत्स्वतनूभवानांकुंतीकुमारान्कुशलोदयाय ॥ कल्लोलजालेनुकालिंदजायागंगातरंगानिवगेयकीर्त्ते ॥ ३३ ॥ पादारविं
देप्रणतीः शिरोभिः शतंशतंसादरमर्पयंतः ॥ पांडोः कुमाराश्चभवंतमेवंविज्ञापयंतिस्मविनीतपूर्वं ॥ ३४ ॥ जातावनेवयममीभि
वदंकभूमौवृद्धिंगताः शिरसिशासनमादधानाः ॥ निस्तीर्णसंगरपयोनिधयस्त्वयाद्यस्थाप्यायथांशमवनेरवनेवनेवा ॥ ३५ ॥
बाल्येवनांतजनुषांममपांडवानामेकाऽपिरक्षणविधौनबभूवधात्री ॥ इत्येवशोकमनिशंत्दृदयेदधानस्तस्यास्तुनार्द्धमपिसंप्रतिदि
त्सासित्वं ॥ ३६ ॥ इत्थंब्रुवाणंयदुवीरमेनंनिश्वस्यदीर्घंनृपतिर्बभाषे ॥ व्यर्थंसिषंव्येध्वममुंविमुंचविमुंचवत्सेत्यनुशास्यशौरि
॥ ३७ ॥ मधुमथननिर्मीलितामुनींद्रैममजननीखलुपुत्रवत्सलासा ॥ मुखमहमनवेक्ष्यमूर्खसूनोर्मुदमधिकामधुनायथादधामि
॥ ३८ ॥ स्वयमपिनविबुध्यतेसुतोऽयंसुमतिजनस्यशृणोतिनापिवाचं ॥ कुरुकुलकुशलांकुराभिवृत्थ्यैगुणगणवारिनिधेगतिस्त्व

१ धात्री उपमाता पृथ्वीच २ व्यध्वं दुष्टमार्गं ३ अंकुराभिवृध्धिः वारिनिधेर्भवतीति भावः.

किघंटापथे ॥ ४९ ॥ तस्मिन्नंगुष्ठमात्रेनवडवमुकुंदेवीक्ष्यसर्वंप्रपंचंसंस्मेराः सिद्धविद्याधरसुरसदसः पुष्पवृष्टिंव्यमुंचन् ॥ सांद्रं
मोहांधकारंसकलमुनिजनः संमदाश्रूणिभीष्मः क्षत्ताऽक्ष्णोः पक्ष्मकंपंकारिपुरजनताप्रेमदुर्योधनेऽपि ॥ ५० ॥ अस्याट्टहासध्व
निरादिपुंसोविशृंखलंव्योम्निविजृंभमाणः ॥ दिग्पालसौधावलिजालकानामध्यापकत्वंबिभरांबभूव ॥ ५१ ॥ संस्तूयमानचरित
स्यजनैस्त्रिलोकीसाधारणीकृतकृपस्यहरेः प्रसादात् ॥ चक्षुष्मतांसमधिरुह्यधुरंमुहूर्तंभूयस्ततोऽप्यवतेतारसभूमिपालः ॥ ५२ ॥
ओजस्तवेदमुपसंहरमाधवेतिघुष्यत्सुनत्सुगुरुभीष्मपुरोगमेषु ॥ घोरंविहायनिमिषेणकुशेशयाक्षोगोपीदृशांकुतुकहेतुमवापरूपं
॥ ५३ ॥ गद्यं ॥ ततस्तादृशंनिरुपमानंतस्यमहिमानमनुभूयचरितार्थोमुनिमौर्यः समुपसृत्यशांतमूर्त्तितमेवमस्तौषीत् ॥ भगव
न्महात्मभिरपियोगिभिरविदितप्रभावायतस्मैप्रभवतेभवनेभगवनेनमः ॥ पद्यं ॥ दुग्धांबुराशितनयानयनद्वयेनतुल्याकृतित्वम
हिमानमिवोपगंतुं ॥ मत्स्यत्वमेत्यभुवियः सुरवैरिनीतामध्येसमुद्रमनवीनगवीर्विचिक्ये ॥ ५४ ॥ मंथानशैलमपिमार्गरुषांहि

१ चरितार्थः कृतार्थः २ सार्थः समूहः ३ अनवीनगवीः प्राचीनवाचः वेदः.

चबहुभिरक्षौहिणिपतिभिरनुक्षणमावेद्यमानांजलिधोरणीमवलोकितुमप्यलब्धावसराणामस्माकंचकिंवासंधानंकिंवातवदूतकृत्यं
किंवामयादेयमीदृग्विधंमुधायासमवधूयभवतायथागतंगंतव्यमिति ॥ पद्यं ॥ आकर्ण्यतच्चकितचेतसिनम्रवक्त्रेकर्णौपिधायनृपतौक
रसंपुटाभ्यां ॥ मत्वातृणायमधुवैरिणमप्यलंघ्यंगोष्ठ्याजवेननिरगात्कुरुराजसूनुः ॥ ४५ ॥ गद्यं ॥ तदनुदनुजारातिरेषरोषस्मित
लेशारूषिताधरस्तादृशेनतस्यावलेपवचनेनभियाविहस्तान्मुदानिरस्तान्समस्तानपिसभास्तारान्पुरस्तान्निरीक्ष्यपुनरपिवाचमेवं
व्याजहार ॥ पद्यं ॥ धराभुजाकिंतटिनीभुवाकिंमयाधुनाकिंवमतापिदूत्ये ॥ पार्थायदातुंप्रभवेद्धरित्रींगदैवमागंधवहस्यसूनोः ॥४६॥
शौरेस्तांवाचमाकर्ण्यसाध्वसाक्रांतचेतसः ॥ जोषंभावंसभास्तारायुगपद्दधुरुत्तरं ॥ ४७ ॥ बहिः ससंमंत्र्यबलावलिप्तैस्त्रिभिः सहा
यैर्धृतराष्ट्रसूनुः ॥ गंधर्वराजेनकृतांदशांस्वांगदाग्रजन्मानमियेषनेतुं ॥ ४८ ॥ श्रुत्वातत्कुपितोहरिः स्वयमसावेकोपिसर्वात्मक
स्ताराभिर्नवभिर्ग्रहैर्निबिडितांशैलैर्वनैः सागरैः ॥ पेटीभूषणमंजरीमिवधृतांकुक्षौजगन्मंडलींजंघालामतनोत्सभाजिरजुषांदृक्पं

१ विहस्तान् व्याकुलान् २ जोषंभावं तूष्णींभावं ३ गदाग्रजन्मानं कृष्णं ४ जंघालां सत्वरां गोचरा मित्यर्थः.

यस्माद्भियाब्धिरपिकंपमकंपमागाद्यत्पत्रिणोविघसएवविभीषणोभूत् ॥ ६० ॥ हन्यामहंयुधिरिपूनहमेवहन्यामित्येवयन्मुसललांगलयोर्विवादः ॥ यस्यांबरंनिजरुचिप्रतिमल्लवर्णंयत्वष्ठसंस्करणमासवपानमाहुः ॥ ६१ ॥ यः स्तन्यपानसमयेसतिपूतनायाः



प्राणानपिप्रविदधेपरमोपदंशं ॥ नाकाधिपस्यवनभूरपियेनसद्योनारीमुदेपदनैस्वंपचधूलिरासीत् ॥ ६२ ॥ वार्यस्तपोधनवरेण्यमनः स्वलीनैस्तृण्यांमुहुः कवलयन्जगदार्तिरूपां ॥ नीचान्विधातुमसुरान्निजशृंगतुल्यान्कोपादुदेष्यतिचयः कुहनातुरंगः ॥ ॥ ६३ ॥ इतिदशावतारहस्यं ॥ एतैः स्तवैर्दृष्टमनायथार्थैर्मदस्मितश्रीमधुराधरोष्ठः ॥ पीठादुदस्थादथपीतवासामेरोर्नितंबादिवमेघशावः ॥ ६४ ॥ आस्थानाद्बहिरेत्यकैठभरिपुर्गांगेयमालिंग्यतंपश्चार्द्धेपरिमृश्यभूपमितरानापृच्छ्यसर्वान्कुरून् ॥ आम्रायातिचिरेणमूर्ध्निविदुरंयुक्तंशतांगंहयैरारूढोऽभिययौविराटनगरीमंतः स्मरन्पांडवान् ॥ ६५ ॥ श्रुत्वाततः परमपुरुषोसमाते





१ अकंपं अचलं २ विघसः भोजनशेषं ३ उपदंशं उपस्वादं ४ पारिजातकस्यच्छायाविरहात् नंदनवने अत्यंततप्तधूलिरासीत् ५ निजशृंगतुल्यान् अभावमवइत्यर्थः.

मांशोर्वीचिकणैः सदृशामंगविषक्तिभाग्भिः ॥ कायेबभारचरमेकमठाकृतिर्यो[1]जीवातुमुद्गमयितुंजलधेः सुराणां ॥ ५५ ॥ दंष्ट्राग्रवर्त्ति[2]किटिवेषधरस्ययस्यक्ष्मामंडलं[3]कुवलयांकुरकोमलाभं ॥ ऊर्ध्वप्रसृत्वरवकावलिकावलीढप्रावृट्पयोदवलयस्यबभारलीलां ॥ ५६ ॥ इंद्रद्विषन्मदगजस्यहिरण्यनाम्नोभेदंरसस्यपिशितस्नवकावलीनां ॥ जिज्ञासमानइवयोधृतसिंहभावः स्तंभादुपेत्यनखैरैस्तमुरस्यभांक्षीत् ॥ ५७ ॥ याच्ञाप्रतारणवशादधियज्ञवाटंयोवामनत्वमवलंब्यबलिंनिगृण्हन् ॥ दुःखंसतांस्वमिवखर्वतमंसुखंचस्वीयंपदक्रममिवोन्नतमाततान ॥ ५८ ॥ मृष्टीपुरा[4]मुखभुजोरुपदेमुरारेरंगाद्द्वितीयमभजत्किमुवंध्यभावं ॥ इत्येवसंशयमशेषजनस्यचक्रेयस्याहवेषुकरतांडवितः कुठारः ॥ ५९ ॥ [6]श्वश्रूर्मुनेरजनियस्यपदाब्जधूलिर्यत्कृष्टभीशाधनुरापशरव्यकृत्यं ॥

१ जीवातुं जीवनौषधं अमृतं २ किटि वराहः ३ कुवलयांकुरः नीलकमलपत्रवद्वत् आभायस्य ४ मुखंच भुजश्च ऊरुश्च पदंच एतेषां समाहारः तस्मिन् ५ द्वितीयं अंगभुजा तत्क्षत्रियाणां जन्मस्थानं ६ रघुवरचरणधूलिसंसर्गात् अहल्यायाः दिव्यदेहप्राप्तिः अतः सामुनेः श्वश्रूरित्यर्थः.

॥ गद्यं ॥ इतिदशनकिरणव्याजादंतश्चिरकालरक्षितंतदंशास्तन्यंप्रकाशयंत्याइवकुंत्यानिदेशंकर्णः कर्णदेशाध्वनीनंविधायसा कमंजलिनासमुचितमुत्तरंबबंध ॥ पद्यं ॥ भोजान्वयोयोभुवनप्रतीतः कुलंकुरूणांचतथाद्वयेऽस्मिन् ॥ तवांबजन्मोपयमोत्सवौ चेच्चथ्येवजागर्त्युचितज्ञभावः ॥ ७४ ॥ अंगद्वयंमेपरिपालनीयंकर्णत्वयाशूरजनाग्रगेण ॥ एवंवशेमेविततानयस्तत्तस्यापिसख्यं किमुपेक्षणीयं ॥ ७५ ॥ परस्यलोकस्यगतेर्हिविघ्नंकृतघ्नतामेववदंतिसंतः ॥ सानस्पृशेन्मामधुनायथात्वंतथाप्रसीदांबकृपार्द्रचित्ते ॥ ७६ ॥ इतिवादिनोरविसुतस्यमानसंनानिवर्त्ततेस्मधृतराष्ट्रनंदनात् ॥ अपितुस्वकीयतनयान्महाभुजादनवाप्यकाममियमेवकेवलं ॥ ७७ ॥ ॥ इत्यनंभट्टकविकृतौचंपूभारतेष्टमस्तबकः ॥ ॥ अथोभयेतेकुरवोरणायस्वनामधेयोपपदप्रसिद्धं ॥ क्षेत्रंव्यगाहंतानिरुद्धपार्श्वाः शतांगमातंगतुरंगयोधैः ॥ १ ॥ हिरण्वत्यास्तत्रत्रिदशाविनुतायास्तटरुहप्रसूनानांगंधैर्मथितपथिखेदाः करिघटाः ॥ कृतज्ञत्वेनेवस्वयमपिमदांभोलहरिभिर्ददुस्तस्यैबह्वीरतिसुरभिगंधाः प्रियसखीः ॥ २ ॥ अस्मज्जन्मभुवः

१ अंगद्वयं शरीरं अंगदेशाश्च.

फेनायमानरणसन्नहनाब्धिपूराः ॥ आराधयन्विधिवदस्त्रगणंस्मशानेपीतांवमंतामिवकांतिमिषेणधूम्यां ॥ ६६ ॥ अत्रांतरे ॥ ततः
परंजन्हुकुमारिकायास्तटीवनेकृत्यविदांपुरोगा ॥ पृथातपस्यंतमवापकर्णकर्णप्रवृत्तिस्तुनकिंचिदस्याः ॥ ६७ ॥ कमनीययशोभ
रेतनूजेकवचोत्कर्त्तनजर्जरांगकेऽपि ॥ नलिनान्मृदुलंनरेंद्रपुत्र्यानयनंतत्रचिरेणसंचचार ॥ ६८ ॥ सतत्रपूतः सवनाभिषेकैस्त
पोवसानेतपनस्यसूनुः ॥ श्रोत्रेवितेनेशुचिमक्षमालांनेत्रेचराज्ञींनिकटप्रपन्नां ॥ ६९ ॥ विनतेः पदयोरनंनरांविहिताशीः परिर
भ्यतंसुतं ॥ परिहर्त्तुमुवाचपंचतामुभयींधर्मसुतादिसूनुषु ॥ ७० ॥ अयिवत्सरवेरनुग्रहादजनिष्ठामयिभाग्यमर्थिनां ॥ तनुरक्षण
मात्रकारिणीतवराधातिरथौनजन्मभूः ॥ ७१ ॥ जहीहिराधातनयत्वबुद्धिंसहैवदुर्योधनसौहृदेन ॥ गृहाणवाण्यासहधर्म्ययामे
सहोदरान्धर्मतनूजमुख्यान् ॥ ७२ ॥ यस्मैकस्मैचनत्वंसहजकवचदः प्रार्थनातुल्यकालंमातुः साक्षान्निदेशेममसुकरतमेमाक्र
थामंदभावं ॥ पाराङ्मुख्यंविधत्तेगुरुजनवचनानुष्ठितौयस्यचेतोधिकृशब्दस्याभिधेयंजगदिदमखिलंदोग्धितस्मैसुखेन ॥ ७३ ॥

१ पंचता मरणं पंचसंख्यांच.

वान्विनिहंतुंपृतनाधिपत्यलक्ष्मीमुपयच्छस्वेतिविज्ञापितस्यापितामहस्यचरणनलिनयोः प्रणिपपात ॥पद्यं॥ दुर्योधनेविशतिमौलिभु
वापदंस्वंशूराग्रणीश्वचरमः सुरसिंधुसूनुः ॥ अर्द्धक्षणादरिभटांस्त्रिदिवेविधास्यन्नध्यक्षतापदमविक्षदनीकिनीनां ॥ ७ ॥ पार्थाश्चते
द्रुपदनंदनमाशुचक्रुः सेनान्यमुद्धतविरोधिवनानिदग्धुं ॥ वन्हिप्रतापकपटान्निजजन्मकालेसक्तंभुजेवहतियः सततंज्वलंतं ॥
॥ ८ ॥ गद्यं ॥ अथसदसिमहारथपरिगणनकथायामर्द्धरथोऽयमितिजान्हवीयेननिन्हुतपौरुषतयारोषचिन्हितवदनरोचिरन्हांप
तिसूनुरन्हाययुधितस्यावधिमेवनिजहेतेरधारणस्यापिसाधारणंप्रतिजज्ञे[1] ॥ इदंप्रतिपद्यखिद्यमानंमानधनंसुयोधनंवत्समाभैषीर्महा
भुजानपिरिपुमहीभुजः मंक्ष्येखरतरविशिखमुखेनखादिष्यामीतिपितामहः प्रसादयामास ॥ तदनंतरं ॥ पद्यं ॥ अभ्रापगातन
यपार्षतनंदनाभ्यामग्र्यावनीतिलकिताधृतकार्मुकाभ्यां ॥ उच्चावचंनिजनिजंबिरुदंवहंतोयुद्धायतस्थुरुभयेपिकुरुप्रवीराः ॥ ९ ॥
जेतापुरामिवपुराजलजातयोनिपक्षीश्वराग्रजमिवप्रथमोग्रहाणां ॥ अग्रेनिधाययदुनायकमात्ततोत्रंपार्थोरथीप्रधनभूमिमवापवीरः

१ भीष्ममरणोत्तर मेवशस्त्र ग्रहणं करिष्यामीतिप्रतिज्ञा.

समानभिधयासप्तापिसिंधूनिमान्नेष्यामोवयंमदशोषणमितिस्फीताभ्यसूयाइव ॥ सेनासैंधवपंक्तयः खुरपुटैर्दोप्रक्षुरप्रोपमैर्भूमेरुल्लि
खितात्स्थलादजनयन्भूयोरजोमंडलं ॥ ३ ॥ तेषांकुरूणांकलहोदयात्प्रायथस्वनानांकरिबृंहितानां ॥ आशामशेषांस्ववशोवि
धातुमन्योन्यमासीत्कलहोमहीयान् ॥ ४ ॥ नाम्नावोनवमग्रहस्यममतांसोढास्महेऽमीवयंतुंगत्वंनसहेमहीत्यतिरुषासन्नाहधूर्या
इव ॥ उद्दंडाअपिकेतवोदद्दाशिरस्थानंग्रहणामतिक्रम्यस्यंदनवृंदमौलिकालितामध्येनभस्वत्पदं ॥ ५ ॥ महीपतीनांपटमंदिरा
णिमार्गंसुराणांलिलिहुः शिरोभिः ॥ वयंहिदूष्याणिशुचीभवेमेत्यभ्रापगावारिमिमंक्षयेव ॥ ६ ॥ गद्यं ॥ ततः क्षणादेवविशाल
विनिर्मितवीथीसहस्रविराजमानविशंकटविपणिविस्तारितविविधपण्याहरणविमर्द्दासहक्रयिकलोकविटकुलानुसार्यमाणविला
सिनीजननिबिडितवेशवाटंविशिखकृपाणकुंतशक्तिप्रासतोमरप्रमुखविविधायुधसंस्कारपरवशयोधसंबाधंतत्कुरुक्षेत्रंकुरुनगर
मित्रंबभूव ॥ तत्रतावद्दुः शासनाग्रजोभगवन्नास्मिन्नुपतस्थुषिवीरभुजाविनोदकालेत्वंविहितविवाहविमुखोपिमदर्थप्रत्यर्थिपार्थि

१. दूष्याणि दोषयुक्तानि पटमंडपाश्च.

किनीबिंदूनामपिसैन्यसिंधुरघटाशुंडासमुत्थायिनां ॥ दानांभः पृषतामपिस्फुटशरत्ताराकृतिस्पार्द्धिनां भेदंग्राहयितुंशशाकगगनेभूं
गानुरोधक्रमः ॥ १८ ॥ आसाद्यद्विपमाहवेरदपथेनारुह्यतीक्ष्णासिनायंतारंविनिपात्यसाट्टहमितंस्कंधेविधायस्थितिं ॥ कुंभास्फा
लनकारिणंरिपुभटंदृष्ट्वादिवौकस्त्रियः कस्याश्चित्कुचकुंभयोः कठिनयोः कंडूरखंडाभवत् ॥ १९ ॥ कश्चिद्गजः प्रतिभटेनकरेवि
लूनेप्यामूलभागमसिनानमिताग्रकायः ॥ क्षिप्रंप्रगृह्यरदनेननिषादिहस्तात्त्रस्तंसृणिंपुनरदात्कुशलायतस्मै ॥ २० ॥ मसितले
पसितौकरिणावुभौयुधिपरस्परदत्तरदौमुखे ॥ हरिरवेक्ष्यवहत्यपिवाहनेसरभसंनिदधेसकलादृशः ॥ २१ ॥ भग्नैकदंतमुसलः प्र
तिदंतिघातात्कुंभाग्रलक्ष्यकुटिलांकुशचंद्ररेखः ॥ कश्चिद्गिरीशसमतांकलयन्करींद्रः सारूप्यभागिवगणाधिपतेर्विरेजे ॥ २२ ॥
कश्चिन्निर्गत्यवेगादरिनृपतिबलेपातयन्स्वामिनंस्वंतत्रस्कंधाधिरूढंविमतमपितथाऽधत्तनीत्वास्वसैन्यं ॥ इत्थंदुः साधरोधोयु
धिकरिकलभोदूरधूतांकुशः सन्विज्ञंमन्यंनिषादिद्वयमपिविदधेहासपात्रंजनानां ॥ २३ ॥ हस्तेनहस्तमथदंतयुगेनदंतौकर्णौच

१ गिरीशः पर्वतः शिवश्च.

॥ १० ॥ संचिंत्यभीष्ममुखबंधुजनस्यहानिंसंतापिनः समरसीमनिशक्रसूनोः ॥ बाष्पांबुचक्षुरधिकंश्वसितंमुखेंदुर्धैर्यमनः करत
लंचमुमोचचापं ॥ ११ ॥ वलारिसूनुंवसुदेवसूनुर्वचोभिराश्वास्यचिरेणतैस्तैः ॥ असासहिंपावकजाठराग्नेरग्राहयत्तत्रपुनः शरा
सं ॥ १२ ॥ देवव्रतस्यजयकेतनचिन्हतालश्यामप्रभावलिरदृश्यतदूरदीर्घा ॥ सख्याः सुतस्यसमरेभुजवीर्यलक्ष्मीसंवीक्षितुंरवि
सुतेवनभोधिरूढा ॥ १३ ॥ युद्धारंभभटार्भटीपिशुनतामुद्दामयंतस्तदा[illegible]ः साणादिमजैत्रवाद्यनिनदानिर्द्धूतशब्दांतराः ॥ श्रांतिं
क्षेप्तुमिवातिदूरपदवीसंपादितामंबुधेर्वेलाशैलमहागुहासुविविशुर्व्याप्तासुधाराधरैः ॥ १४ ॥ संग्रामदुंदुभिरवश्रवणेनदेवाः सर्वे
कपाटघटितानिगृहाणिकृत्वा ॥ आदायनंदनवनादभिषेक्तुमाजौवीरान्प्रसूनचयमप्यभजन्विहायः ॥ १५ ॥ सतिधर्मजलेमिथो
विमर्द्दात्सकलंत पनेतुमंगकेभ्यः ॥ मघवत्प्रमुखाः सुराबभूवुर्मरुतोपिस्वयमात्ततालवृंताः ॥ १६ ॥ तत्रतौरिपुगणौशनैः शनैः
संगतौसधनुषौसुगर्जितौ ॥ पूर्वपश्चिममरुत्प्रचोदितौपुष्करेनवघनाघनाविव ॥ १७ ॥ धावत्स्यंदनकेतनांशुकमरुद्व्याधूतमंदा

१ भटार्भटी भटानांयोधानांआर्भटी शौर्यव्यापारः २ मरुतो देवावायवश्च ३ पुष्कर आकाशे कुरुक्षेत्रेच.

गादसिमृतमसिमान्कुंतिनंकुंतधारीचक्रास्त्रंचक्रहेतिर्गदिनमपिगदापाणिरन्योन्यमेत्य ॥ स्वस्वास्त्राणांप्रयोगेदृढपरिचितयोर्हं



तृवध्यत्वशैलीसाधारण्येप्रतिष्ठामथाविदधुरमीद्वंद्वयोधाग्रगण्याः ॥ ३१ ॥ ततः धृष्टद्युम्नोत्कृत्तवर्माणमग्रेदृष्ट्वाहाहाशब्ददीनां



स्वसेनां ॥ कोदंडज्यामामृशन्घोरघोषांकोपाद्भीष्मः प्राविशत्पार्थसैन्यं ॥ ३२ ॥ ससिंहनादेसरितः कुमारेचापंसमाकृष्यशरैर्वि मुक्तैः ॥ परान्परीतुंप्रथमंप्रवृत्तेवरान्वरीतुंववलेऽप्सरोभिः ॥ ३३ ॥ पृथासुतानांपृतनांतरालेपृथक्पृथक्तस्यपृषत्कवर्याः ॥ द्विपा न्सहस्रंतुरगान्सहस्रंभटान्सहस्रंपतितानकार्षुः ॥ ३४ ॥ सिंधोः सुतस्यविशिखैर्जमदग्निसूनोः प्राणान्विलिह्यधिगितिप्रविमुक्त वाद्भिः ॥ कृत्तान्यमुंचतविरोधिकुलानिकश्चित्कश्चिज्जवेनजगृहेयुधिभूतवर्गः[1] ॥ ३५ ॥ देवव्रतेदलितवैरिणिदृष्टमात्रेसारथ्यमा त्रकरणेकृतसंगरोपि ॥ मूलेनकेवलमसौमुरभिद्रथस्यमध्येपिचक्रमतिविभ्रमयांचकार ॥ ३६ ॥ अरिमंडलखंडनैः पृषत्कैरवदी



र्णारुधिरापगावलीनां ॥ अवनीपतयोरुषानिजानामाधिविन्नो[2]जननीममुष्यचक्रुः ॥ ३७ ॥ गद्यं ॥ तदनुसमरसंमुखीनवैरिभट

१ भूतवर्गः पृथिव्यादिः पिशाचादिः २ अधिविन्नां.सपत्नीं.

कर्णयुगुलेनपदौचपद्भयाम् ॥ वालेनवालमभिहत्यचवारणौद्वौतुल्यांगयुद्धमतिशिक्षितमादधाते ॥ २४ ॥ निषादिनोदंतिशिरस्य धोमुखांनिपातितांगालगुडस्यताडनैः ॥ व्यथापनोदायमदस्यसौरभंविनम्यजिघ्रंतइवालुलोकिरे ॥ २५ ॥ तीक्ष्णैः प्रत्यर्थिभल्लैरप ह्वतशिरसांहस्तिपानांशरीरादुत्क्रांताः प्राणवाताः करिमदपयसांसौरभीमुद्वहंतः ॥ पायंपायंकपोलस्थलकुचकलशस्वेदवारिप्र वाहंचक्रुः संमर्द्दभाजांदिविसुरमुदृशांनालवृंतस्यकृत्यं ॥ २६ ॥ अश्वावुभौतस्थतुरग्रपादावुत्क्षिप्ययुद्धाभिमुखीभवंतौ ॥ परस्प रस्योपरिहेतिपातात्स्वसादिनौत्रातुमिवोर्ध्वकायौ ॥ २७ ॥ एकैववैरिभटखड्गवरस्यधारा धारासुपंचमुमतीष्वपिकंचिदश्वं ॥ स्कंधेविभिद्यतदसूनितरैर्दुरापान्जग्राहनाल्पमपितल्क्षतजांबुलेशं ॥ २८ ॥ समरभुविबभारेसादिनोभूषणानांमरकतमणिभासां मध्यगः कश्चिदश्वः ॥ सकलभटविमर्द्दैश्चंचलाद्विबभेदेनिपतितइवरथ्यो नेतुरन्हांशतांगात् ॥ २९ ॥ आयोधनांगणजुषाममृगा नामावर्त्तगर्त्तपतिताः कुणपाहयानां ॥ संबभ्रमुर्विहितपूर्वमुपाददानाः शिक्षाविशेषमिवमंडलचंक्रमेषु ॥ ३० ॥ धन्वीधानुष्कमा

१ धारासुपंचाश्वगतिविशेषेषु.

दारोहतिभगवतिविवस्वतिसमरवर्षासमय शिखंडिनागांडीविनापुरस्कृतंशिखंडिनंसमीक्ष्यस्त्रीपूर्वोयममुनासहनयोद्धव्यमिति निषिध्यहस्ततलनिरस्तधनुर्लस्तकः प्रथमंस्वदूरापसरणकुपितयेवसिंजिन्यापश्चाद्दूरानेष्कासितैर्विजयविपाठैरा दिवसावसानमंवदारितकलेवरतयानितांततांतः शांतनवः शांतमनाः स्वांतनिहितरमाक्रांतः सुभटलोकसमुचितांशरशय्यांक्रमादधिशिश्ये ॥ ॥ पद्यं ॥ पार्थेनक्षितिविनिखातपुंखकानांवाणानामुपरिपितामहः शयानः ॥ वभ्राजेव्रणविलवांतरक्तबिंदुधाराणघनइवशक्रगोपवर्षी ॥ ४१ ॥ संवीक्ष्यतत्रतमिमंशायितंशरेषुसांक्रामिकंगुणमिवप्रतिपद्यमानः ॥ भास्वानपिस्वयमुपात्तकरोष्मशांतिः पाश्चात्यसागरशरेषुशयालुरासीत् ॥ ४२ ॥ जगतिविनुतकीर्तौजामदग्न्यस्यशिष्येकवलितरिपुवर्गेकालधर्मप्रपन्ने ॥ बहुसुरवरलाभाद्दृढकामोत्सवानां श्वशुरमरणदुःखंस्वर्वधूनांबभूव ॥ ४३ ॥ पतितेयुधिवाहिनीसुतेपतदश्रुद्विविधापित्रोर्वाहिनी ॥ प्रथमंपरितापमुज्झितंपटवेश्मानिययौततः परं ॥ ४४ ॥ ॥ इत्यनंतभट्टकविकृतौचंपुभारतेनवमस्तबकः ॥ ॥ अपरेहनिकौरव

१ शिखंडिना मयूरेण युत्धप्रियेणेत्यर्थः २ लस्तकः धनुर्मध्यं ३ शक्रगोपाख्याः रक्तकीटाः ४ शरेषु वाणेषु जलेषु च ५ वाहिनीसेना.

प्राप्तपरिमोषणोन्मुखशिलीमुखप्रस्थानसमयसमापृच्छनपात्रीकृतकर्णपुटैर्बलवैरिनगरवास्तव्यवारवनिताजनतापाणिपंकेरुहप
रिगलितपारिजातप्रसवसहापतितचंचरीकपुंजमंजुकूजितव्यंजित[1]भेदचिकुरबंधैर्वेगादापातितविशिखविघट्टनविपर्यस्तविकटमु
कुटविशंकटविप्रकीर्णमुक्ताफलशंकावदान्यरणश्रमवारिशीकरनिकरकोरकितनिटिलभागैरोषातिरेकव्यतिकरितदशनावलि
दंशनपुनरुक्तरक्तिमाधरैरयुतेनराज्ञांशिरोभिः कल्पांतरुद्रबंधुः सुरसिंधुसूनुरयंवसुंधरांबंधुरयांचकार ॥ पद्यं ॥ नद्याः सुतेनज
नितैर्नवदेववर्गैः सांद्रैस्वधाम्निसतिसंकुचितस्थितीनां ॥ स्वर्गौकसामजनिमास्वयमेवकाम्याकूलंकषाकुशिकनंदनकोपमु
द्रा ॥ ३८ ॥ भीष्मस्यकन्याजनपाणिपीडांपितुर्मुदेत्यक्तवतोपितस्य ॥ संघात्सुराणांसतिपुष्पवर्षैसंतान[2]लाभोऽजनितद्विचित्रं
॥ ३९ ॥ इत्थंविधायदिनमेकमसौसमीकंपाश्चात्यभूधरमुपेयुषिपद्मबंधौ ॥ प्रत्यर्थिनामिवचकारब[3]लापहारंस्वस्यापिचापशिख
रादवरोपितज्यः ॥ ४० ॥ गद्यं ॥ इतिनवदिनानिनवनवानिभुजलताविलसितानिप्रकाश्यदशमेन्हिनिजध्वजचिन्हमात्रंविय

१ व्यंजितः प्रदर्शितः २ संतानलाभः पुत्रप्राप्तिः पक्षेकल्पवृक्षपुष्पप्राप्तिः ३ बलं[illegible]ः सेनाच.

विजंभमिदोऽवकाशंतस्थेऽमितास्त्रिदशकिन्नरयक्षसिद्धैः ॥ ९ ॥ गद्यं ॥ ततस्ततेसर्वेपि¹नरेंद्रावसुधातलनिहितवामजानुभागाः स्वोलितमंत्रमुदीर्यतूणीरपेटकसमुत्थापितान्जीवा²कर्षणसमुपजातत्वरान्परुषभीषण विषदिग्धान्विनतातनयनिबद्धस्पर्द्धाभरांस्तक्षकमुखान्बाणपन्नगान्नभोभुविचिरंनर्त्तयंतः परस्परपरिपंथिनांप्राणपवमानमपीप्यन् ॥ पद्यं ॥ कलशीतनयेऽथकार्मुकंस्वंवलयीकुर्वतिवैरिधन्वियूनां ॥ युधिकेवलमेवचापदंडाधृतजीवाजनदृक्पथेऽवतिष्ठन् ॥ १० ॥ विधान्मृष्टिंविपरीतरूपांविधातुमुद्युक्तइवैषवीरः ॥ शराभिवर्षेणचकारराज्ञामूर्ध्वैकवंधानिशिरांस्यधस्तात् ॥ ११ ॥ तावद्द्रोटैर्वलक्षैर्वलयितसविधेतास्थिवांसंशतांगेभारद्वाजोजिघृक्षुर्नृपतिमभिययौभल्लवृष्टींविमुंचन् ॥ दंष्ट्रारोचिः शलाकास्तुमुलमवकिरन्दिक्षुसर्वासुघोरः शीतांशुंमध्यसीम्निस्थितमिवपरिधेः सिंहिकायाः कुमारः ॥ १२ ॥ गद्यं ॥ तदनुतदीयमार्गणगणाभिघातनिवर्तितमुखैर्निजशिलीमुखैः सहदूरमुपयातान्मातरिश्ववैश्वानराश्विनेयतनयप्रभृतीन्क्षितिपतिरथरक्षिणः प्रवीरानभिवीक्ष्यक्षणेनमांधवधाव्यमानतुरगेणप्लवंगकेतनोनगो



१ नरेंद्राः राजानः विषवैद्याश्च २ जीवाः मौर्व्यः प्राणाश्च ३ विनतातनयः गरुडः.

श्वमूनामधिपत्वेपरिकल्प्यकुंभयोनिं ॥ पुरतोनिजगादभीष्मपातादुदितोच्छूनदृशांनराधिपानां ॥ १ ॥ कुंभोत्पत्त्याप्रसिद्धोमुनि
वृषभइववक्ष्माधरंविंध्यसंज्ञंलोकेतादृग्विधस्त्वंयुधिनिजमहसाभूभृतंस्तंभयित्वा ॥ जीवग्राहंगृहीत्वाविनमितवदनंलज्जयाधर्मसू
नुंपद्भ्यामेवप्रचारंविदधतमधुनालीलयामेऽर्पयेति ॥ २ ॥ उदितंतदिदंनिशम्यगोष्ठ्यामुचितज्ञः करमुन्नमय्यकिंचित् ॥ गुहस
न्निभविक्रमस्तदानींगुरुरेषोपिकुरूद्वहंबभाषे ॥ ३ ॥ कर्तुंहिशक्यमखिलंनृपकांक्षितंनेधर्मात्मजेपरिवृतेपिधराधिनाथैः ॥ शौरि
प्रणुन्नहयहेषितशब्दमिश्रोनश्रूयतेयादिनरस्यशरामघोषः ॥ ४ ॥ सर्वास्त्रविद्यासहवाससौख्यसंकेतभूमेरपितस्यवाचं ॥ प्रत्युद्य
यौतांपरिषद्गतानांतिर्यक्प्रचारः शिरसोनृपाणां ॥ ५ ॥ अथद्रुपदजद्रोणौरथद्विपहयावृतौ ॥ बद्धायतमहोत्साहौयुद्धायनिरगच्छ
तां ॥ ६ ॥ नामाक्षरांकितनदीसुतबाणपूर्णरंगेऽवतेरतुरुभावपिराजवर्गौ ॥ मक्ष्वेलितौसविरुदौसमदाट्टहासौसस्फालनांसशि
खरौसहवल्गनौतौ ॥ ७ ॥ अक्षौहिणीरवनिवल्लभवाहिनीनामेकत्रगाढमिलिताः सुतरामसोढ्वा ॥ सायुद्धभूमिरुपरीवसमुत्पतंती
सांद्रारजः पटलिकासमदृश्यताभ्रे ॥ ८ ॥ भेरीरवेगगनशायिनिबाहुलीलांद्रोणस्यवीक्षितुमनोभिरदृष्टपूर्वा ॥ मध्येविसृज्यदि

तनाकुक्षिमाविक्षदेकः ॥ १७ ॥ युध्वाचिरेणयुगमात्रमपास्यरथ्यान्निर्धूनितेनसरुषागुरुणानिकृत्तं ॥ तस्याथरंगभुविसत्याजितो
वरांगंबाष्पांबुभिः सहपपातयुधिष्ठिरस्य ॥ १८ ॥ उच्चयात्वरयातस्मिन्नुपकंठंसमागते ॥ पार्थस्यपश्यतोऽग्रेतंप्राणाअपितथाऽ
चरन् ॥ १९ ॥ तस्याथद्वेष्टृसेनाजलधिकवलनात्कुंभयोनित्वकीर्तिस्पर्ष्टीकर्त्तुस्वकीयामिवकुतुकवतः पार्श्वमभ्येत्यकोपात् ॥
भीमोरथ्यानमथ्नाद्द्रुपदतनुभवः सूदयामासमूतंकोदंडंकेतुदंडंद्वयमपिदलयांचक्रतुर्दस्रपुत्रौ ॥ २० ॥ गद्यं ॥ ततस्तादृशंकुंभसं
भवस्याभिषंगमभिवीक्ष्यक्रोधनतयाकर्णतालसमीरणसमृद्धिपरिणनचक्रवातगर्भपरिभ्रमद्रथकेतुपताकापटसहस्रसंपादितसमरसा
गरावर्त्तवशंवदफेनकूटशोभानिसकलदिङ्मुखघंटापथजांघिकघंटाभरणरणितबाधिरीकृताष्टलोकपालपुरजनानिनिबिडसुरसमा
जसमाक्रांतगगनमंडपसंधिबंधस्थिरीकरणायदत्तानिंद्रनीलस्तंभानिवशुंडादंडानूर्ध्वमुन्नमय्यमानानिसमस्तानिहास्तिकानिपुर
स्ताद्विस्तार्यरणमत्तोभगदत्तः सुप्रतीकमधिरूढोहटाद्भीममभिदुद्राव ॥ पद्यं ॥ घोरेऽभियातेसतिसुप्रतीकेदूरेससर्पद्विषतांबलौ

· १ निर्धूनितेन सत्यजिता कंपप्रापितेन २ अभिषंगं पराभवं ३ सुप्रतीकं भगदत्तहास्तिनं

द्रौवदीप्रवाहमिवदुर्निरोधरथचर्यमाचार्यमुपरुरोध ॥ पद्यं ॥ शिवयुद्धकृतस्तस्यद्रोणेयुद्धेप्यभून्मनः ॥ सर्वापिजनताश्रेयः कांक्ष
तिस्मुत्तरोत्तरं ॥ १३ ॥ दातागृहीतापिधनंजयावित्युद्दामशब्दोभुवनेषुयस्य ॥ विस्फारघोषोधनुषोऽस्यभूयान्विजृंभतेस्मद्विषताम
सह्यः ॥ १४ ॥ नामैषांमेज्यायसः पुण्यकीर्त्तेरासीदिष्टंमात्स्यपुर्यामितीव ॥ गांडीवोत्थैरेषबाणैर्हतानांकंकान्क्रव्यैर्विद्विषांपर्यता
र्षीत् ॥ १५ ॥ गद्यं ॥ तदनुसव्यसाचिशरवीचीनीचीकृतभुजदंभविजृंभः कुंभसंभवः समरायपरिगृहीतेषुसंविधानेषुतूणीमात्र
मेवप्रातिभटाभिमुखंविदधानैर्योधैः साकंचंडभानुश्चरमगिरिरिवस्वयमपिस्वकटकस्यसीमानमासीदत् ॥ पद्यं ॥ अन्येद्युर्द्रोणसं
चोदितनृपवचनेतस्थिवद्भिस्त्रिगर्तैराहूतेऽन्यत्रयोद्धुंगतवतिविजयेकृष्णक्लृप्तप्रशंसे ॥ प्रातस्तेधार्त्तराष्ट्राः परबलमभजन्वीतभीकै
रनीकैर्दावज्वालेनशून्यंवनमिवचमरावल्गवद्भिः स्वयूथैः ॥ १६ ॥ भारद्वाजोपितस्मिन्नहनिकुरुपतेर्वांछितार्थविधास्यन्नंधा
न्वैषैकतानोरथमथनिकषास्थापितेधर्मसूनोः ॥ कृष्णाभ्यांरक्षणायप्रथितभुजमदेसत्यजित्युत्स्फुलिंगंदृष्टयोर्युग्मंनिरवायप्रतिभटपृ

१ शिवः शंकरः शिवं मानपात्रविशेषः २ द्रोणः द्रोणाचार्यः द्रोणं मानपात्र विशेषः ३ विस्फारः विशेषेणस्फारः तारः ४ संविधानेषु साधनेषु ५ निकषा समीपं

प्रस्थानकर्मसमयेभयदायिनोस्यनोगस्यदर्शनमजायतयत्समीपे ॥२६॥ अथतेनहरेः सुतायमुक्तंत्वदिकृत्यस्वयमात्मदैवमस्त्रं ॥



तदिदंवनमालयामुकंदः सहवास्तव्यकुटुंबितामनैषीत् ॥ २७ ॥ सफल्गुनस्तत्रचकारबाणैश्चिकीर्षुमंत्याक्षरेवर्जितंस्वं ॥ क्रौंचा



चलात्पीवरमप्यरातेः करेणुमाद्याक्षरयोगशून्यं ॥ २८ ॥ मदपंकललामगंधिभालंमघवत्सूनुररेर्निपात्यशीर्षं ॥ पृथुलांमुदमाददेत

तोसौपृथिवीगंधवतीनिर्गौतमोक्तेः ॥ २९ ॥ भगदत्तेवधंयातेमहमत्तेनहास्तेनना ॥ मत्यजिन्नाशशोकानिमत्यजन्पार्थसैनिकाः

॥ ३० ॥ गद्यं ॥ तदनुनाम्नारुणेनेजामिसंध्ययाऽपितादृशोकलशयोनिः स्वयंनाम्नागुरपिव्यथयाऽपितादृग्विधस्त्रिभिरेवांगैर्विरलि

तेनबलेनानुगम्यमानस्तादात्विकमनोरथमिवदूष्यतामुपगनमावामंशनैः शनैरावर्वृते ॥ पद्यं ॥ शिविरमेत्यतदैवसुयोधनः शि

तशरव्रणमोचितकंचुकं ॥ मृदुलमंचगतंकलशोद्भवंविरचितांजलिरेवमभाषत ॥ ३१ ॥ महारथत्वंममवांछितद्रुंफलेग्रहिंनप्रतनो



षियस्मात् ॥ कृपेतिशब्दोपिवभूवनूनं-ह्रस्वस्त्वयिश्यालइवत्वदीये ॥ ३२ ॥ गद्यं ॥ भंगवंन्भवदभिधामिदानींस्मरणपथमारो

१ नागस्य हस्तिनः सर्पस्यच २ फल्गुतुच्छमित्यर्थः ३ रेणुंधूलिं संहारमित्यर्थः ४ तादात्विकः तात्कालिकः ५ दूष्यता दुष्टत्वं पटगृहत्वंच.

वः ॥ परश्वधाक्षेपतितेंबुपूराः पत्युर्नदीनामिवपश्चिमस्य ॥ २१ ॥ केतून्पातयनोरथान्श्लथयतोदंतावलान्कृंततोघोटान्पाटयनो
बिभिद्यगदयाभीमोद्विपान्विद्विषां ॥ संग्रामांगणरक्तवारिलहरीसंलक्ष्यमाणस्वकच्छायामात्रसहायमेवविदधेतंसुप्रतीकंक्षणात्
॥ २२ ॥ पादाग्रहस्तरदनप्रनिघातलीलाभग्नारिरक्तमसृणोभगदत्तदंती ॥ आलक्ष्यतक्षितिभृतस्तटवप्रकर्मण्यालिप्तगात्रइवगौरि
ककर्दमेन ॥ २३ ॥ तदनुकरटिमल्लंतत्रवीक्ष्यापतंतंदलितपरबलंतंदंतकुंतंवहंतं ॥ चकितत्हृदयवृत्तेर्धावतोवायुसूनोर्जनकगुणस
मृद्धिर्जंघयोराविरासीत् ॥ २४ ॥ गद्यं ॥ इतिसुप्रतीकसंक्षुभितनिजध्वजिनीचरकोलाहलसमाकर्णनसमाकुलमानसोवासवसू
नुर्महेषुनिषूदितावशेषसंसप्तकगणदूरनिरासप्रयुज्यमानवायव्यास्त्रवेगार्द्धंविभज्य निजरथायावितीर्णवा निवतूर्णमासाद्य निर्वेलभु
जगर्वदुर्विलसितौकुंभजातकिरातराजौनिरुध्याचिरेणयोधयामास ॥ पद्यं ॥ मनश्चपार्थस्यरथंचभंक्तुंमदावलेंद्रस्यकरेप्रवृत्ते ॥
सारथ्यचातुर्यवशेनशौरेर्भग्नः सतस्यैवमनोरथोभूत् ॥ २५ ॥ पार्थस्यतस्यतदनुप्रहितावधायभंगंययौपथिशरैर्भगदत्तशक्तिः ॥

ण्यः ॥ ३७ ॥ समयेप्रतिपद्यवैरिवृत्तंतपसः सूनुरभाषताभिमन्युं ॥ अयिवत्सपितान्यनोधुनातेतवभारोऽजनिसर्वसैन्यरक्षा ॥३८॥
कवचंप्रतिमुंचधत्स्वचापंभजधैर्यपरितोविधेहियोधान् ॥ अधिरोहशतांगमाविशत्वंकमलव्यूहमरीन्निपूदयस्व ॥ ३९ ॥ गद्यं ॥
इतिराज्ञोनिदेशंमौलिदेशेनिवेश्ययोद्धुंप्रतिष्ठमानेजयानिः साणभेरीपटहपणवाद्यैर्वाद्यैर्गगनशायिनेगुणायसौखशायिनिकायमा
नेलीलयापद्मव्यूहगर्भमवगाह्यबालेपिस्वयमेकाकिनिनिजकोदंडचंडिमसंपदाकौरवचमूंक्षोभयमाणेसौभद्रेसिंधुपतिर्व्यूहमुखंपि
धायस्मरहरवरलाभदर्पेणतदनुधाविनींपांडववाहिनींरुरुधे ॥ पद्यं ॥ उद्यद्भिर्युद्धरंगादपिसुरवनितापुष्पवर्षात्पतद्भिर्वेगाल्ल
ग्नैः परागैर्दृढतरघटितेचक्षुषांपक्ष्मयुग्मे ॥ स्थित्वामध्येंतरिक्षंविजयसुतभुजागर्वलीलायितानिद्रष्टृणांखेचराणांभृशमनिमिषतात
त्क्षणंभंगुरासीत् ॥ ४० ॥ शरशायिनैर्द्विरदशैलमंडलैर्विपुलैर्विधायविपमांवसुंधरां ॥ पृथुचक्रवर्तिपृथुयत्नवैभवंवितथीचकारवि
जयस्यनंदनः ॥ ४१ ॥ पार्थात्मजोभानुसुतस्यसोमिच्छित्वाशतांगंसितभल्लवृष्ट्या ॥ पितामहोक्तंकुरुराजगोष्ट्यांतथ्यंचकाराद्धर

८६

१ सामिबंधं.

तवैवहस्तेममकार्यसिद्धिंकृत्वाचधामस्वामि
पयचेतसासावधानेन ॥ पद्यं ॥ पितामहः सोपिपृषत्कतल्पेवपुर्निजंमाधवमंतरंगे ॥ तवैवहस्तेममकार्यसिद्धिंकृत्वाचधामस्वामि
येषगंतुं ॥ ३३ ॥ तमेतंदयमानेनसमेतंशोकसंपदा ॥ ऊचेऽथगुरुणातेननीचेतरगुणाब्धिना ॥ ३४ ॥ वाष्पातिवृष्टावपिपांडवा
नां[१]पयोरुहव्यूहवितीर्णमोदान् ॥ प्रातः श्वएवाखिलधा[२]र्त्तराष्ट्रान्संचारयेयंयुधिवा[३]हिनीषु ॥ ३५ ॥ गद्यं ॥ इतिगिरातमाश्वास्य
राजानंसदनायविसृष्टवतोमुहुर्मुहुरर्जुनस्यसव्यसाचित्वशैलीमनु विचिंत्यत्द दि[४]रंणर णिकामनणीयसीं बिभ्राणस्यद्रोणस्यसकाशा
द्विनिर्गतांनिद्रासखींविचेतुमिवसानिशापितरसानिरगात् ॥ पद्यं ॥ अपरेद्युरसौवृतोबलौघैरथभेरीनिनदैर्नभोविभिंदन् ॥ कव
चीविशिखीरथीशरासीकलशीसूनुरवापयुद्धरंगं ॥ ३६ ॥ आश्चर्य[५]स्थूललक्ष्यंतदनुदिविपदामंतरिक्षस्थितानांक्षो द्राणांरिपूणामसु
मृगहरणेकूटयंत्रायमाणं ॥ गंधर्वैः केसराढ्यैर्मदमधुभिरिभैः केतुपत्रैः शतांगैः पद्मव्यूहंव्यतानीत्प्रधनभुविगु सांयुगीनांग्रग

१ पयोरुहव्यूहः कमलसमुदायः कमलाकार सेनारचनाच २ धार्तराष्ट्रान्हंसान् दुर्योधनादींश्च ३ वाहिनीषुनदीषु सेनासुच ४ रणरणिकांचिंतां ५ स्थूललक्ष्यं दातारं.

परस्परसाद्यवंतौचक्रे कृतांतपुरवर्त्म नेगंतुमग्रे ॥ ५० ॥ अथकर्णमुखामहारथास्तेमिलिताः कैतवमेत्ययौगपद्यात् ॥ सुरनायक
पौत्रमेनमस्त्रैः स्वयशोभिः सहपातयांबभूवुः ॥ ५१ ॥ गद्यं ॥ तदनुतत्रतयोः मेनयोः क्ष्वेलितरुदितेआपिस्पर्द्धाजनितयापरस्पर
विजिगीषुतयेवव्योमसीमानमुदलंघयतां ॥ तदानींखलु ॥ जगतिनियमिवृद्धपरिषदूर्ध्वविक्षिप्तकरपुटजलांजलिक्षालनादिव
व्यपेतमहोष्मणिपूषणिनीद्वावपिबलौघौनिजस्कंधावारानुसंधानायनिरगच्छतां ॥ पद्यं ॥ अथत्रिगर्तान्नृपतान्क्षुरप्रैः सहस्रगर्त्ता
न्विरचय्यगात्रे ॥ विनैवहेतुंव्यथमानचेनाविडौजसोपिन्यवृतत्कुमारः ॥ ५२ ॥ बाष्पायतेदृष्टियुगंकराग्राच्चापोगलत्यंतरुदेति
तापः ॥ फलंकिमेतस्यभविष्यतीतिविचिंतयन्धामविवेशराज्ञः ॥ ५३ ॥ तदाश्रुनेत्रानथरूर्वबंधून्निशाम्यसूनोश्चनिशाम्यवार्त्तां ॥
तापापदेशेनधनंजयस्यचित्तंचुचुंबस्वसनामतेजः ॥ ५४ ॥ वीरंतनूजमनुचिंत्यविलापभाजंधारालदृष्टियुगुलंधरणौलुठंतं ॥
वाग्भिश्चिरेणवसुधाधिपसंयुतस्तंविश्वंभरोर्जुनमपिव्यदधादशोकं ॥ ५५ ॥ इंद्रात्मजस्तदनुबाहुमुदस्यकोपात्सिंधूद्वहस्यसमरे



१ स्कंधावारः पटगृहं २ निशाम्यदृष्ट्वा ३ स्वसनामतेजः अर्जुननामधनंजयोति तत्समानं नामयस्यतत्तेजः अग्निः

त्वमस्य ॥ ४२ ॥ अथोभिमन्युर्धृतभूरिमन्युर्द्रौणिंतदेर्ष्यास्मितकांनिलक्ष्यात् ॥ बाल्येनिपीतानिवपिष्टमारानुग्रैः शरैरुद्वम
यांचकार ॥ ४३ ॥ सुतस्यशौर्यात्सुरराजसूनोरुदीर्णदिग्भ्रांतिरुदारभीतिः ॥ कृपस्वमुर्मंगलतंतुनैवसाकंचकंपेसगुरुर्मुहूर्त्तं ॥
॥ ४४ ॥ विशिखंमुमुक्षुमथगौतमात्मजेविबुधेंद्रपौत्रमभिवीक्ष्यभीषणं ॥ जननेविपद्यापिजनारणांगणेशरएवहेतुरितितस्यमेनिरे ॥
॥ ४५ ॥ आश्चर्यकर्मसुकृतेष्वपिहर्षभारान्मोक्तुंमुहुर्मुहुरमुष्यशिरोजबंधे ॥ दृष्टास्तदामुमनसोदिविकर्तृभूतानाकेंद्रनंदनवनेननुक
र्ममूताः ॥ ४६ ॥ अमुष्यकोदंडमखंडयद्रवेः सुनोरथाश्वान्प्रममाथकुंभजः ॥ कृपः कृणातिस्मशरेणसारथिंव्यपाटयत्केतुपटान्गु
रोः सुतः ॥ ४७ ॥ एकाकिनः परिभवायबहून्प्रवृत्तानेतानवेक्ष्यनिखिलोपिनिलिंपवर्गः ॥ मंदारशाखिकुसुमानियथाभिमन्यौ
निंदारवान्रिपुषुतस्यतथाभ्यवर्षत् ॥ ४८ ॥ रथादवप्लुत्यगदासखस्तदाविदार्यबालोविजयात्मसंभवः ॥ चकारमंदाक्षभृतोनकेव
लंरथानमीषांयुधितानपिक्षणात् ॥ ४९ ॥ बालौततः कृतरणौधृतराष्ट्रपौत्रौभीरूपृथग्गमनकर्मणिमन्यमानः ॥ पार्थात्मजः सतु

१ शरः कुशः बाणश्च २ देवाः पुष्पाणिच ३ मंदाक्षं लज्जा पक्षे मंदंअक्षंरथावयवं.

॥ पद्यं ॥ संसप्तकासुरपलायनवेगभंगीतत्तादृशमिभिनयान्निवशौरिनुन्नः ॥ वेगेनविस्मयकरेणविरोधिसैन्येत्रिश्वक्चचारविजय
स्यशतांगवर्यः ॥ ५८ ॥ तत्रनिन्हुतदिनेश्वरदीप्तौजृंभितेतमासिधूलिमिषेण ॥ खिद्यतिस्मयुधिपांडवसेनात्द्द्यतिस्मसहसाकुरु
सेना ॥ ५९ ॥ गांडीवमेतेनधनुर्विकृष्टंन्हस्वंचदीर्घंचबभूवयुद्धे ॥ तुलामिवर्णेनतदाधिरोढुंस्वनामधेयस्थितिशालिनेव ॥ ६० ॥
अस्तंगतश्चेदरविंदबंधुर्वध्याभवेत्सापिमदीयसंधा ॥ इतीवसंक्रंदननंदनोसौतदीयमार्गंरुरुधेशरोघैः ॥ ६१ ॥ मृत्संगतेनोष्ठपुटे
नभूभुक्संबंधितांस्पष्टमिवब्रुवाणैः ॥ धनंजयोसौशितभल्लकृत्तैः शिरोभिराच्छादयतिस्मधात्री ॥ ६२ ॥ वंगंकंककुलामिषंधृतावि
पल्लिगंकलिंगंपुनर्भोजंभाजनमापदांयमपुरीसीमारुधंमागधं ॥ चोलंदुःखनिचोलचित्तमिषुभिः कुर्वन्मुपर्वाधिभूपुत्रस्तत्रादिनाव
सानसमयेरुंधेस्मासिंधूद्वहं ॥ ६३ तत्रांतरे ॥ भूपस्तूत्तपमानर्धाभयभराज्जिजज्ञामुरिंद्रात्मभूवार्त्तामात्याकिमाहृतारिपुचमूव्यूहंप्राति
प्राहिणोत् ॥ जित्वातौगुरुमात्तासिंहनिनदौसंवीक्ष्यभूरिश्रवाराधेयश्चहठादुभौरुरुधतुः संक्षोभयंतौकुरून् ॥ ६४ ॥ अथसोमदत्त





१ इवर्णेनन्ह्रस्व दीर्घेकारेण.

द्विषतांसमक्षं ॥ हेत्यां[1]श्वएवयदितस्यशिरोनकुर्यांतस्यांविशेयमहमित्यकरोत्प्रतिज्ञां ॥ ५६ ॥ अथवृत्तमेतदवकर्ण्यभीरवोवितताव
सिंधुपतयेप्रतिश्रवं ॥ तवगुप्ति[2]युग्ममपिमेभरोर्जुनात्समरेष्वभीरितिगभीरधीर्गुरुः ॥ ५७ ॥ गद्यं ॥ अन्येद्युरवलंबितप्रथमशिखारिसा
नौभानौस्कंधावारयुगवसुंधराधिपतियुद्धसन्नाहपैशुन्यलंपटपटहध्वानतरले सिंधुराज[3]युगलेशरणागतभरणालंकर्मीणेनभगवता
पाणिमित्रतोत्रेणपद्मनेत्रेणसौभद्रवधशोकातिरेकपरिगलितशूरजनबाष्पपूरपंकिलेद्वारतलेसमानीतंसौवीरनायकगोपनस्थलदि
दृक्षयेवतुंगतरकेतुशृंगमधिरूढेनकपिपरिवृढेनपरिमंडितंमानसमार्गणगरुडगंधवहबांधवैराहितबंधनंस्यंदनमधिरुह्यसंक्रंदननं
दनः समरोचितवेषसंपदविकलेननिजबलेनसहप्रतिष्ठमानोनिरुद्धवियत्पथैरथैर्मदबंधुरैः सिंधुरैर्विविधगतिनाटकैर्घोटकैः कृतर
णासत्ति[4]भिः पत्तिभिश्चविरचितपरिपंथिजनमोहस्यपद्मव्यूहस्यपृष्ठभागेजयद्रथंप्रतिष्ठाप्यस्वयमपिपुरोभागंपरिष्कुर्वाण[5]स्यद्रोणस्य
चरणयोर्बाणाभ्यांप्रणिहितप्रणिपातस्तेनदीयमानमार्गावकाशश्चंडमारुतइवमेघमंडलंतमेवव्यूहंक्षणादेवक्षोभयामास॥तदनंतरं॥

१ हेत्यांशस्त्रेज्वालायांच २ गुप्तिः गोपनं रक्षणंच ३ सिंधुराजः जयद्रथः समुद्रश्च ४ आसत्तिः अत्यतसंबंधः ५ परिष्कुर्वाणस्य अलंकृतवतः.

विवस्वतः सुतंविदधातिस्मवृकोदरः क्षणात् ॥ ७१ ॥ अथान्यमासाद्यरथंक्षणेनकर्णः कुरूणांधुरिकार्मुकस्य ॥ पूर्वंगुणेनाशुग जातमेकंपश्चादटन्याप्यपरंनिरास्थत् ॥ ७२ ॥ मारुतिस्तदनुसोमदत्तभूपादपांसुपरिधूसरोरसा ॥ कंसमर्दनकनीयसासमंशंकनं दनसमीपमापसः ॥ ७३ ॥ गद्यं ॥ तदनुदनुजपरिपंथिनिशरपुंजेनकुरुकुंजरान्भंजयंतंधनंजयंतंसुतवधेनकृतमंतुंरिपुमादिश्यानि हंतुंदलितदैत्यचक्रेणनिजचक्रेणचंडकरमंडलंपिदधानेगभस्तिमानस्तमास्तेतिसमस्तानिजबलकोलाहलमाकर्ण्यदुः शल्लाजानि र्मुदासहनिजवदनमुदास ॥ पद्यं ॥ तदाप्रकाशस्यदिवाकरस्यतिरोहितस्यापिजयद्रथस्य ॥ अदर्शनायापिचदर्शनायसुदर्शनं हेतुरभून्मुरारेः ॥ ७४ ॥ सकलमपिजगांतिचक्रयूथंसवितुरदर्शनतः सखेदमाहुः ॥ समरभुविकथंनुशौरिचक्रंतपनातिरोभवनंतदा चकांक्षे ॥ ७५ ॥ तावत्किरीटीतरुणेंदुमौलेर्वदान्यताकीर्तिवदावदेन ॥ अस्त्रेणशत्रोरलुनीतशीर्षंसाकंप्रमोदेनसकौरवाणां ॥ ७६ ॥ वृद्धक्षत्रांजलौसायंनालमभ्यायकंधृतं ॥ इतीवासिंधुराजस्यजिष्णुस्तस्मिन्नपातयत् ॥ ७७ ॥ एतत्किमित्ययमपास्य

१ आशुगजातं बाणसमूहंभीमंच २ चक्राश्चक्रवाकाः ३ कंउदकं शिरश्च ४ सिंधुराजस्य जयद्रथस्य पक्षे समुद्रस्य.

तनुजोरमापतेरनुजोपिभग्नरथसूतकार्मुकौ ॥ परिगृह्यपट्टसलतांपरस्परंप्रधनंभयानकमुभौवितेनतुः ॥ ६५ ॥ अथशिनितनयंनि
पात्यभूम्यामुरसिधृतासिरसौतुसौमदत्तिः ॥ गलयितुमिवगर्वसारमंतार्निजचरणेनानिपीडयांबभूव ॥ ६६ ॥ तदाहरिर्दूरगतोपि
नाक्षं[1]व्यापारयामासरथेऽर्जुनस्य ॥ निजानुजातोरसिदत्तपादेभूरिश्रवस्येवमहारथेऽस्मिन् ॥ ६७ ॥ चोदितस्यहरिणाकिरीटिनो
मार्गणेनल्द्दतहस्तपल्लवः ॥ सोमदत्ततनयोनकेवलंकौरवाअपिविहस्ततां[2]ययुः ॥ ६८ ॥ भूरिश्रवास्तदनुपुत्रममुंबलारेर्भूयोविगर्ह्यपु
रुषोत्तमसन्निधाने ॥ आचम्यपावनमसौकुशं[3]मेकमन्यदास्तीर्ययुद्धभुवितत्रशयालुरासीत् ॥ ६९ ॥ गद्यं ॥ तदनुहिडिंबवैरीदिननाय
कतनयसाहाय्यकेनभयानकसायकनिकायवर्षिणाममर्षिणांदर्पेणगरीयसांदुःशासनयवीयसामुज्जासयितुंदलिताविमतमदांनिज
गदामष्टाभिः काष्ठाभिःसमंभ्रामयामास ॥पद्यं॥ गांधारजाजठरसीम्निपुराश्मदत्तांदत्वादशांयुधिगदापवमानसूनोः ॥ दुःशासनानु
जकुलायहियौगपद्याच्चक्रेमिथोष्टनवातिंत्रिदशास्तुयातृः[4] ॥ ७० ॥ विहयंविरथंविसारथिंविशरासंविपताकिकापटं ॥ विशिखेन

१ अक्षं रथावयवं नेत्रंच २ विहस्तः हस्तरहितः व्याकुलश्च ३ कुशं उदकं दर्भंच ४ यातृः भ्रातृ जायाः परस्परं यातरः ताः.

अमीषुयुद्धदिवसेष्वयमेवाहिकामुकः ॥ रणोत्सवंविभज्यार्धरात्रयोपिददौयतः ॥ ८२ ॥ ततः क्षणादेवघटोत्कचोमौसंग्रामसीमो
परिजृंभमाणः ॥ तमीमिमांसांद्रतमांतमोभिर्दंष्ट्राप्रभाभिर्दिवसंवितेने ॥ ८३ ॥ निष्ठद्रोणसुयोधनद्रुततरंधावस्वदुः शासनत्वांमुं
चामिकिमथभोः कृपकृपालेशोपिनत्वत्कृते ॥ गांधाराधिपकाकथानवरणेदुर्मेधसामग्रणीः कर्णः क्वेतिघटोत्कचः कटुरवोव्यभ्रा
म्यदभ्रांतरे ॥ ८४ ॥ हैडिंबेयममुंनिजाट्टहसितैः क्षुभ्यद्दगाशामुखंदंष्ट्रांकूरकरालमात्तपरशुंदृष्ट्वैवकोचिद्भटाः ॥ विभ्युश्चुक्रुशुरामि
मीलुरवनौपेतुर्मुमूर्छुर्जहुः प्राणानारुरुहुर्विमानममरीः प्रापुः प्रमोदंदधुः ॥ ८५ ॥ नभासितमाभिवीक्ष्यघोररूपंदिशिदिशितत्रप
लायितेनृपौघे ॥ मरणसमयमुष्टिलग्नशस्त्रस्तदभिमुखः प्रययौकबंधएव ॥ ८६ ॥ पितुश्चपुत्रस्यचवेदवाक्यैर्यदुक्तमैकात्म्यमिदं
हिदृष्टं ॥ भीमात्मजोपिस्वयमेवयुद्धेभीमोयदासीदारिसैनिकानां ॥ ८७ ॥ भिंदीपालैस्तोमरैः शूलजालैर्वर्षैरुग्रैश्चोभयेषांनगानां ॥
दृष्टः क्वापिक्वाप्यदृष्टोरिसैन्यंव्योम्निछित्वानामशेषंसचक्रे ॥ ८८ ॥ स्वस्वक्षयंनागमदद्यरात्रौदुर्योधनस्यध्वजिनीतिमत्वा ॥

१ कबंधः अपमूर्ध कलेवरं २ नगानां पर्वतानां वृक्षाणांच ३ क्षयं निवासं नाशंच.



९०

सुतस्यशीर्षेशयिन्स्वमूर्द्धनिवरेणशशांकमौलेः ॥ क्षोण्यामवाङ्मुखतयानिपपातवेगादाघ्रातुकामइवतत्सुतवत्सलत्वात् ॥ ७८ ॥
॥ गद्यं ॥ अथतस्मिन्वासवसूनौवासरविरामेशिबिरमेत्ययथावृत्तंरणकथांविज्ञाप्यत्दृष्टरोमाणंराजानमुपतिष्ठमानेसुयोधनस्तुक्रोधनतयाभगिनीजानिहानिनिदानतयासर्वामपिशार्वरींनियोद्धुकामः सन्गंभीरंयुद्धारंभभेरीनिध्वानमुज्जृंभयामास ॥ एतदाकर्ण्यसमरवैज्ञानिकंस्मरणमात्रकृतसान्निधानंनिशिदशगुणितभुजबलावलंबंहिडिंबभागिनेयंपृथक्प्रस्थाप्यस्वयमपिसकलान्यपिनिजबलानिसन्नाह्यसंयुगाययुगायतबाहवः शक्रसुतादयोनिश्चक्रमुः ॥ पद्यं ॥ यातारकामेसततंविरुद्धातांबिभ्रतीमाइतिबद्धरोषं ॥
सर्वेंद्रियेसत्यपिसैनिकानांमार्गंदृशामेवतमोरुरोध ॥ ७९ ॥ शार्वर्याश्चिकुरेमनोजशिखिनोधूमेनभोरण्यभूजंबूशाखिनिपेचकैकांडजदृशामालोकसिद्धांजने ॥ चेलेकालहलायुधस्यतमसामुज्जृंभणेतादृशेप्यन्हीवाहवशिल्पमद्भुततमंचक्रुर्द्वयेसैनिकाः ॥ ८० ॥
प्रधनेद्भुतेपिनिशिनारददृष्टेः प्रथमेतराव्यलसदीतिरुदग्रा ॥ वनिताअपित्रिदशनाथनगर्यावरणस्रजंचिकुरएवबबंधुः ॥ ८१ ॥

१ वैज्ञानिकं कुशलं २ तारका अक्ष्णः कनीनिका नक्षत्रंच ३ पेचकाः उलूकाः ४ द्वितीया ईतिरनावृष्टिः रात्रौ युद्धदर्शनाभावात्.

बद्धतनुमातेनतुः ॥ पद्यं ॥ तस्यार्द्धमग्नानाराचास्तन्वांतद्विक्रमश्रियः ॥ रोचंतेस्मप्रत्त्दृष्यंत्यारोमांचानामिवांकुराः ॥ ९३ ॥ आग्निवेश्येननिक्षिप्तमथोभौद्रोणपार्षतौ ॥ कोदंडविद्यासर्वस्वंकुर्वातेस्मप्रकाशितं ॥ ९४ ॥ गद्यं ॥ ततः शरसंभवभगिनीजानेश्वापचतुर्मुखोतिवृद्धत्वविश्राणित विकृतवेषयोरपिविशिखविमोचनसृष्टिशिल्पेन विलोभनीयविग्रहीकृतयोर्विराटपांचालयोरहंपूर्विकयावरणोत्सवयौगपद्येविबुधपुरवारविलासिनीनांबिडौजसः कुटुंविन्याअपिदुः समाधेयंविवादमापादयामास ॥ अथतत्रशर्वरीचरभुजगर्वनिर्वीतपर्वतशृंगाशिलाविभंगविपाटितशरीरेवसंध्यारागामिषेणरुधिरधारामुत्सृजंतिसानिशा पिनाशदशामाशुसमाविवेश ॥ तदनुकोककुटुंबिनीनांनग्नंकरणेमहसिसमारूढविहायसिक्रोधनिद्रानिरोधसाधारणीभवदरुणिमदृक्प्रतिफलनैरायोधनधरणीरुधिरधुनीषुपंकेरुहाण्यंकूरयंतोघटोत्कच विराटपांचालपंचताप्रपंचितवैरभारतयागुरोरायुर्हेतुमलिकाक्षरंपरिमार्ष्टुमलीकंवचनमेकंप्रयुज्यतामितिधर्मजातमनुकूलयंतोवसुदेववायुवासवकुमारादयः प्रधनसंन्निकृष्टधृष्टद्युम्नवरूथिनीविमाथिनींवार

१ विलोभनीयः प्रार्थनीयः पक्षेवीनां पक्षिणां लोभनीयः गृध्रभक्ष्यइत्यर्थः २ अलिकं ललाटं.

पितृव्यभक्त्येवसभीमसूनुस्तत्रैवतस्याः क्षयमाततान ॥ ८९ ॥ तत्रांतरे ॥ वाहिन्याएवमेनार्द्धमोदिन्याआपिनंक्ष्यति ॥ क्षणंयुत्थ्ये
त्वचेदेषइतिमेनेसुयोधनः ॥ ९० ॥ गद्यं ॥ इत्थंनितांतचिंतासंतानार्दितस्यसंप्रार्थनगुणनिकयासंभृतसर्वाभिसारोमिहिरकुमारो
वज्रधारयामहेंद्रोमहीध्रमिवतेनदत्तयावलक्षाश्वक्षपणदक्षेयमितिचिररक्षितयामहत्याशक्त्यावक्षसिनिर्भिद्यक्षणेनतंक्षणदाचरंक्षि
तौन्यक्षिपत् ॥ पद्यं ॥ पौत्रस्यतस्यप्रबलप्रसिद्धेः प्रहारपीडांप्रतियोधदत्तां ॥ अपारयन्द्रष्टुमिवातिघोरामंतस्थितोवायुरगाद्बहिष्ठात् ॥
॥ ९१ ॥ सापिशक्तिरभिहत्यनराशंसांयुगीनजनसंनुतशौर्यं ॥ वायुसूनुपरिघादिवभीतावासवस्यसविधंप्रतिपेदे ॥ ९२ ॥ गद्यं ॥
तदानींतत्रतेषांकौरवकौंतेयसैन्यानांवाष्पलहरीमुत्पादयितुंमोदविषादयोरहमिहमिकयास्पर्द्धासमवर्द्धत ॥ अथजयद्रथघटोत्क
चनिधनशोकातिरेकगुरून्द्वयानपिकुरूनाश्वासयितुमिवकुरुकूटस्थेकुमुदबांधवेकुलिशायुधदिशमेत्यकाशनिकाशैरभीशुभिरा
काशंदशदिशावकाशंव्याकोचमानेसातिकोपेनकुटिलीकृतचापौद्रुपदविराटभूपौद्रुतमनीचैर्नाराचैराचार्यंशललैः शललमिवानि

१ सांयुगीनाः युद्धसमर्थाः.

तोपिगेहमागाद्दिनदीपांकुरदीनदीनदीप्तिः ॥ शकलीकृतबाहुकर्णनासैः सहयोधैः सघटोत्कचाश्मवर्षात् ॥ ९९ ॥ ॥ इत्यनंतभट्टकविकृतौचंपुभारतेदशमस्तबकः ॥ ॥ अन्येद्युरब्धिमिलितैरसृगापगानापूरैरिवोदयतिपूषणिशोणितांग ॥ सेनाधिपत्यसरणौधृतराष्ट्रसूनुः कर्णसुवर्णघटवारिभिरभ्यषिंचत् ॥ १ ॥ आभात्तदानीमभिषेककालेतस्योपरिष्टात्तपनीयकुंभः ॥ आघ्रातुमात्मप्रभवोत्तमांगंसमीपयातोवसरोजबंधुः ॥ २ ॥ दिङ्मूलशैलकुहरेशयकेसरींद्रमौखप्रसुप्तिकमहापटहारवेण ॥ कर्णोबलेनकरनर्तितकालपृष्ठोजन्यस्थलीमथरथेनजवाज्जगाहे ॥ ३ ॥ तावत्परेषांध्वजिनीश्वरोपिपदंव्यधत्तप्रधनप्रदेशे ॥ परिस्फुरत्पट्टसखेटशक्तिशरासतूणीरशरैर्बलौघैः ॥ ४ ॥ चमूद्वयीसातदनुप्रगल्भाप्रसृत्वरैर्व्योमनिपांसुपुंजैः ॥ प्रागेवशुद्धामपिसिद्धसिंधुंविचित्रमेतद्यतनोदपापां ॥ ५ ॥ पादातंपादातंरथ्यांरथ्याचहास्तिकंगजता ॥ आश्वंचाश्वीयंद्रागभिदुद्रावप्रकंपितमहीकं ॥ ६ ॥ विरोधिसेनामभिवीक्ष्यकोपाद्विस्फारिताद्भानुसुतेनचापात् ॥ विजृंभमाणंतरसागुणंस्वंवियत्समस्तंनशशाकवोढुं ॥ ७ ॥ कुरुचमूष

१ व इव २ कालपृष्ठं कर्णधनुः ३ अपापां निर्जलां पापरहितांच.

णघोरणीप्रचेतसमिवपयोधरपरंपरांपुरोधायभृशंखस्यगुणंशंखस्यपरिपूरणेनतुर्यहंकुर्वंतंकुरुसेनाधिपतिमभिजग्मुः ॥ पद्यं ॥ कोपे
नतावल्कुटिलः सभीमः कुंभानभांक्षीद्विदयागजानां ॥ नामैकदेशोपिचकुंभयोनेरेतैर्धृतोभूदितिमत्सरवि ॥ ९५ ॥ गद्यं ॥ इ
तितत्रकरिघटांपाटयताघटोत्कचजनकेनद्रोणसुतस्यसनाम्निहस्तिनिनिपातितेसतिप्रचुरतरमदः स्ववंशानुवर्तीशुभतरमाणिदेदी
प्यमानमस्तकोऽयमश्वत्थामाहतइतिधर्मतनयगदितंकर्णारुंतुदमभ्यर्णमाकर्ण्यवैवर्ण्यभरितवदनंसुतनाशशोकमोहपरित्यक्तचाप
शायंस्थंडिलेशयंभारद्वाजमवलोक्यत्द्दष्टतरधीर्धृष्टद्युम्नोपिनिजपितृबंधनवधस्मृतिजनुषारुषासत्वरमेत्यहंतुमुदयुंक्त ॥ पद्यं ॥
एकेनखड्गंद्रुपदस्यसूनुः करेणचान्येनकचेगृहीत्वा ॥ विलूयशीर्षंगुरुमप्यमुंद्रागंतेवसंतंकलयांचकार ॥ ९६ ॥ तंताद्दशंतदनु
तातवधंनिशम्यकोपातिरेककलुषः कृपभागिनेयः ॥ आग्नेयमस्त्रममुचत्परसैनिकानामक्षौहिणीशलभतांलभतेस्मयस्मिन् ॥ ९७ ॥
ततः सुराधीश्वरसूनुमुक्तब्रह्मास्त्रभासाभृशाधिकृतेन ॥ अस्त्रेणसार्द्धंगुरुनंदनस्यमंदायमानद्युतिरासभानुः ॥ ९८ ॥ धृतराष्ट्रसु

१ वशाकारिणी २ शयः हस्तः ३ अंतेवसंतं शिष्यं आयुर्हीनंच.

कालबुभुक्षितैः पिशाचैरधिकंमांसमिवाहवादुपात्तं ॥ १६ ॥ अवरोपितज्यमथकर्णकार्मुकंविरतौदिनस्यविजहौविनम्रतां ॥ अवलोकनायहरिदंतरेभयाद्द्रवतामरातिधरणीभुजामिव ॥ १७ ॥ अप्राप्तनूतनशरक्षतिभिः स्वसैन्यैरस्पंददृष्टिभिरनुक्षणमीक्ष्यमाणः ॥ दुर्योधनाग्रकरसंवलितांगुलीकः प्राविक्षदात्मकटकंसतुभानुसूनुः ॥ १८ ॥ गद्यं ॥ अपरेद्युःपरिस्फुरत्कमलचक्रव्यूहेप्रकाशमानपत्रिकुलसंचारेप्रकटितधनजयनेजोवर्द्धनेभाविनिप्रधनइवप्रभातसमयेप्रादुर्भवतिसतिमधुमथनसारथेर्मघवत्कुमारस्यवधकृतेशल्यसारथ्यमेवसाधनमवधारयताराधातनयेनकृतबोधनः सुयोधनोमानधनभाजंमद्रराजमुपगम्यस्वागमननिदानपरिज्ञानेनविमनायमानमपितंतैस्तैर्मधुररचनैर्वचनैः कोपगिरेरधित्यकाप्रदेशात्कथंचिदवरोप्यकर्णरथनेपथ्यंसारथ्यमधिरोपयामास ॥ पद्यं ॥ अथमद्रनायकनिबद्धसैंधवंरथमारुरोहरविभूः पराक्रमी ॥ प्रमदश्चकौरवचमूचरान्क्षणादतिसाध्वसंचपरयोधमंडलं ॥ १९ ॥ ततः क्षणादेवरथेनतेनसंग्रामसीमानमुपेत्यवीरः ॥ शंखंतदंत्याक्षरवाच्यमेतदद्वयंनिनादैरपुपूरदेषः ॥ २० ॥ गद्यं ॥

१ कमलचक्रव्यूहः कमलाकारव्यूहः चक्राकारव्यूह अपक्षे कमलानांचक्रवाकानांचव्यूहः समूहः २ वर्धनंवृद्धिः छेदनंच ३ नेपथ्यमलंकारः

तिबाणविदारितादुदपतन्मणयः करिमस्तकात् ॥ सुतवितीर्णनिजास्पददुर्दशांद्युमणयेविनिवेदयितुंकिल ॥ ८ ॥ अनेकधादत्त
बिलास्यबाणैररातिखेटावलिराबभासे ॥ भीर्व्रीडखेदावकराद्गृहीतुंपृथक्तयाऽसून्यमचालनीव ॥ ९ ॥ तदनुबाणगणैर्द्युमणेः सु
तोधृतविपत्तिसपत्तिकदंबकं ॥ अतिविषादिनिषादिकुलंव्यधाद्यमपुरीपथिकान्रथिकानपि ॥ १० ॥ अग्रेसरः कर्णहतेषुकाश्चिद्व
टः प्रविष्टोरविरंध्रमार्गे ॥ निलिंपचाटुस्तुतिपुष्टदेहोनिर्गंतुमीष्टेस्मनाकिंचिदुच्चैः ॥ ११ ॥ पुष्पप्रदानेनसुरद्रुवर्गैश्रांतेऽमराणांप्रथमं
वृतानां ॥ हठेनकंठादपल्हृत्यमालामवृण्वताभ्यग्रसुरानमर्यः ॥ १२ ॥ तंतादृशंतरणिभूभुजचंडिमानंसंवीक्ष्यसर्वरिपुदृक्षुचभीति
भाक्षु ॥ आसीत्प्रमोदपरिमेदुरमेकमेवसव्येतरंरणतलेवनमालिनेत्रं[1] ॥ १३ ॥ रिक्तेपुष्पैः सिद्धगंधर्वमुख्येमुक्त्वामुक्त्वामूर्ध्निवीरस्य
तस्य ॥ द्वावेवाभ्रेद्योसदांगोष्ठिमध्येपूषाचंद्रौपुष्पवंतावभूतां[2] ॥ १४ ॥ वियत्प्रदेशाद्द्विशिखैः कठोरैर्द्रुद्रावदूरंध्रुवमब्जबंधुः ॥
अमुष्यनोचेदचिराद्व्रजेरन्पादाः[3] कथंपाटलिमातिरेकं ॥ १५ ॥ तरणेः किरणैस्तदारुणानांपटलंव्योम्निपयोमुचांबभासे ॥ चिर

१ वनमालिनेत्रं सूर्यः २ पुष्पवंतौ पुष्पयुक्तौ पक्षे पुष्पवंताविति सूर्याचंद्रमसो रेकतंत्रेणोक्तिः ३ पादाः चरणाः किरणाश्च.

ष्टैः ॥ भवानभूत्पार्थशरप्रयोगात्कर्णोऽपिभूत्वाकथमात्तगंधः ॥ २४ ॥ इंद्रात्मजातेनसतेनगंतुमीष्टेतुलामीश्वरएकएव ॥ तृणाय मत्वानिजजीवनंयोयुद्धाययेनस्पृहयन्नुदस्थात् ॥ २५ ॥ गद्यं ॥ इतितस्यमद्राध्यक्षस्यतादृक्षमृभुक्षकुमारेपक्षपातंसमीक्ष्यकर्मसाक्षिनंदनोऽपिरौक्ष्यवर्जपदविभागचमत्कृतिसुभगंभावुकंवचनमेवमभाणीत् ॥ पद्यं ॥ अयिभागिनेययशसांसुभगंकरणत्वमद्यभुविमद्रपते ॥ मममातुलेतिबहुधावदताविजयेनशंभुमपिमातुलय ॥ २६ ॥ इत्युक्तवतएतस्यसौरेर्दंतपटाविव ॥ जवाद्भावनीकौतौजघटातेपरस्परं ॥ २७ ॥ सर्वतोऽपिभुविसैन्यपरागैः शोषितेषुसजलेषुसरस्सु ॥ केवलंगगनएवतदानीमप्सरः कुलमदृश्यतलोकैः ॥ २८ ॥ गद्यं ॥ तत्रसेनयोरुभयोरपिपरस्परघट्टनजनितस्फुलिंगव्याजेननिपीतपूर्वान्रुधिरशीकरनिकरानजीर्णशंकयावमंतीभिरिवपट्टसवल्लरीभिश्श्रकैबंधोत्पादनसृष्टिपाटवंसंग्रामदेशदेशिकसंदेशादभ्यसितुमवनीतलमवतीर्णैः पयोधरपटलैरिवखेटकवलयैर्युगपदेवबहुविधवीरयोधजनप्रवेशसौकर्यायतराणिरंध्रसरणिमति विशालयितुमिव वियत्तलेदूरंदूरमुच्च लिताभिः

१ आत्तगंधः गृहीतगंधः पक्षे पराभूतः २ अप्सरः कुलं सोदक सरसां देवांगनानांचसमूहः ३ कबंधं मस्तकरहितं शरीरं जलंच ४ सदेशात् सान्निध्यात्

तदनंतरं ॥ प्रचंडतरदोर्दंडश्चंडकरसूनुर्निजयंतारंमद्रनेतारंप्रतिवचनमित्थमुत्थापयामास ॥ इदानीमयिशल्यतवसारथ्यकौशलं
निशम्याविजयसारथेर्वदनंलज्जापयोधौसहमज्जनकृतेनाभिकमलवास्तव्यस्यनयनायुधसारथेश्चत्वार्यपिमुखानिसमाव्हायितुमि
वभृशमवनतमास्ते ॥ अपिच ॥ पद्यं ॥ मेरुत्कदंबैरुपलाल्यमानंमद्रेंद्रदीप्ताखिलहेतिजालं ॥ शैराभिवर्षणधनंजयंतामिंगालये
षभुजः क्षणेन ॥ २१ ॥ गद्यं ॥ ततस्तांश्रवणपुटक्रकचंवाचमाकर्ण्यपार्थेनपुराप्रार्थितमर्थंत्वादिकृत्यसमद्रभूपतिरवार्यसूर्यतनय
धैर्यगगनकुसुमसोदर्यंविधातुमेवमुत्तरमुत्तरंगयामास ॥ पद्यं ॥ पुराविराटस्यपुरोपकंठेरणांगणेसाराथिनार्जुनस्य ॥ उत्पाटयमा
नेपिरयेणनेत्रे निद्राकथंतेल्हृयंगमासीत् ॥ २२ ॥ आयासलेशारहितंवनसीम्निपूर्वंसंदानितेसुत्दृदितेसुरवांशिकेन ॥ कुत्रापिगू
ढवसतिस्त्वमहोनिकुंजंकिंनाबिभेः सविधकीचकरंध्रगानात् ॥ २३ ॥ पांचालिकायाः परिणीतिकालेसंघभिवाद्भिः सहधार्त्तरा

१ नयनायुध सारथेः शिवसारथेः ब्रह्मणः नदुः खंपंचभिः सहेत्युक्तत्वात् २ मरुतः वायवः देवाश्च ३ हेतयः शस्त्राणि ज्वालाश्च ४ शराः बाणाः
शरमुदकं ५ नेत्रेलोचने वस्त्रेच.

वशादिवविविधानिरेचकमंडलानिवितन्वन्निजास्पदभेदकोभीमः क्वासमागच्छतीतिवीक्षितुमुन्नतप्रदेशमधिरूढाभ्यांत्वदंतर
रुधिरबुद्बुदाभ्यामिवरोषलोहिताभ्यांलोचनाभ्यांसाध्वसदानशौंडः करतलबंभ्रम्यमाणघनतरपरिघविघट्टनविपाटितभटघोटक
करटिघटाक्षतजप्रवाहैः समरसीमांकंठद्वयसींविदधानः सुयोधनानुजोवियदध्वनिविजृंभितध्वनिर्वृकोदरदृगध्वनीनोऽभूत् ॥
॥ पद्यं ॥ बद्धकच्छावपिद्वौतावभीकौभीमकौरवौ ॥ गदागदिरणंघोरंकुर्वातेस्मपरस्परं ॥ ३१ ॥ निपातितस्यद्विषतः सभूमौसम
क्षमक्षणांकुरुभूपतीनां ॥ गंडेकराभ्यामुदरेपदाभ्यांसंताडनंसाधुसमाचचार ॥ ३२ ॥ निजप्रियाकैश्यकृषोऽस्यशत्रोर्निर्भिद्यवक्षः
पिबतोऽसृगंभः ॥ समीरसूनोश्चपिशाचिकानांसपीतिकेल्यांकलहोबभूव ॥ ३३ ॥ एणदृशः स्वकीयायावेणींतैरेवशोणितैः ॥
क्षोणिभृतांद्विषामेषशोर्णांचक्रेसहाक्षिभिः ॥ ३४ ॥ तदनंतरं ॥ रिपुंकुरुक्षेत्रतलेचरंतंतृणायमत्वावृषसेनमुग्रं ॥ किरीटिगोपः पैर

१ कंठप्रमाणां २ अभीकौ कामुकौ भीतिराहितौच ३ सपीतिः सहपानं ४कुरुक्षेत्रं कुरूणां केदारंच ५ परधेनुकाः रिपुशस्त्राणि अंतयतीति पक्षे अन्येषां उत्कृष्टानांवा गवांकांतं.

शक्तिभिश्च प्रतिक्षणक्षपित विपक्षकुलवृत्तांतंमुहुर्मुहुरटनीमुखेनकथयितुमिवधानुष्ककर्णमभ्यागतैः कोदंडदंडैश्चवि चित्रतरचक्र
चंक्रमणमिषेणपदात्पदमपिनगंतव्यमितिविमतनिरोधकुंडलनामिवकुर्वद्भिरर्वद्भिश्चयुद्धविलोकनबद्धकौतुक सिद्धयौवतकुचमंड
लनिजकुंभतारतम्यपरिचिक्षिषयेवदूरंदूरंनभसिकरान्प्रविसारयद्भिः शुंडालमंडलैश्चवेगसंभ्रमसं विदार्यमाणधरणीरंध्र निर्गत्त्वरफ
णींद्रफणासहस्रमणिकिरणधोरणीमसृणितैरिवशोणितपंकशोणितैश्चक्रैः संक्रीडाद्भिः शतांगैश्चभयानकंसकलसुरजनतनूरुहसौखशायनिकंसमकिमभूत् ॥ तदनंतरं ॥ पद्यं ॥ दुःशासनोनयनजृंभितकोपवन्हिभीत्येवफालतलमूर्ध्वमुपाश्रिताभ्यां ॥ भ्रूभ्यांभया
नकमुखोरिपुभूमिपालप्यारब्धयोधयितुमेतदतीवाचित्रं ॥ २९ ॥ सकुंतलाल्यंबरधूतिधुर्यः स्वसिंहनादैर्विदधेदुरापं ॥ पराभवं
सोमकलास्यहेतौपांचालिकायामिवपार्थचम्वां ॥ ३० ॥ गद्यं ॥ ततोयाज्ञसेनीकाटितटपटापहारसमयचक्रचंक्रमणवासनानुवृत्ति

१ यौवतं युवतीनां समूहः २ सौखशायनिकं सुखशयनं पृच्छतीति ३ योधयितुं युद्धंकर्तुं पक्षेयोधान् कर्तुं ४ कुंतलानां कुंतधारिणां आल्याः पंक्तेः अंबरे आकाशेयाधूतिः उत्क्षेपणं तस्यांधुर्यः समर्थः पक्षे केशपंक्तिः वस्त्रांचतयोः आकर्षणे अग्रगण्यः ५ सोमकला चंद्रकलाआस्य हेतुर्मुख हेतुर्यस्यास्तस्यां पक्षे सोमकानांतन्संज्ञकराज्ञां नृत्यहेतौ.

कर्ण्यशरासवल्लिघोषंसुतयोस्तत्रसहस्रदृष्टिघृष्ट्योः ॥ दिविवैणिकतापसस्यचित्रंमहतीप्रीतिरभूत्ववनैवचाभूत् ॥ ४४ ॥ उल्लोलकल्लोलितदोर्विलासावुपेंद्रमद्रेश्वरसारथीतौ ॥ परस्परंभल्लकुलैरभूतांरुषाभिलीढावरुषापिलीढौ ॥ ४५ ॥ कर्णामरेंद्रसुतकार्मुकवल्लिवांतैर्नीरंध्रमंबरतलेनिबिडेपृषत्कैः ॥ अभ्यागतानमरभावमुपेत्ययोधान्पप्रच्छवैणिकमुनिः प्रधनप्रकारान् ॥ ४६ ॥ पाणिनातदनुभानुनंदनेपन्नगास्त्रमचिरेणगृण्हति ॥ पूर्वमेवनिखिलाप्सरः कुलात्सादधौवरणमाल्यमुर्वशी ॥ ४७ ॥ सव्यसाचिहननायशरासेसंहितेरविभुवाभुजगास्त्रे ॥ नंदनाद्वितयवत्वममंस्तस्वस्यकल्पकवनेनसहेंद्रः ॥ ४८ ॥ रावितनयविमुक्तमस्त्रमेतद्विविरसनायुगलंबहिर्वितन्वत् ॥ अहमरिमधुनाद्विधाकरोमीत्यभिनयकेलिमिवादधद्बभासे ॥ ४९ ॥ द्विधाविधातुंविजयंशिरोघावथापतंतंससरीसृपंतं ॥ निरीक्ष्यभारेणनिजेनशार्ङ्गीनिमज्जयामासशतांगमुर्व्यां ॥ ५० ॥ आनेमिमग्नस्यहरेरुपायात्तदाशतांगस्यकिरीटिनोस्य ॥ गर्भेवकाशंकिलबांधवेनशंभोः शतांगोधरणिर्व्यतानीत् ॥ ५१ ॥ ततः कुरूणामिवपुष्करांतेक्ष्वेडार्भटींजृंभयतानि



१ महती अतिशायिता नारदवीणाच २ अरुषाव्रणेन ३ संहिते योजिते.

धेनुकांतंनिनायकांडैर्यमलोकगोष्टीं ॥ ३५ ॥ अवकर्ण्यकिरीटिभग्नमाजावभिमन्योरधिकंसुतंसकर्णः ॥ रिपुरंकुतरक्षुरष्टदिक्षु
ज्वलयन्चक्षुरभूदरीन्दिधक्षुः ॥ ३६ ॥ कुंडलीकृतकोदंडश्चंडभानुतनूभुवः ॥ तांडवंविदधेपाणिः पांडवानांबलांतरे ॥ ३७ ॥
युद्धेहतोयोधसमूहएषाबिंबांपितुर्मेबतभेत्स्यतीति ॥ मत्वेवपत्युर्महसांकुमारः संच्छादयामासदिवंशरौघैः ॥ ३८ ॥ करींद्रमंडलेपेतुः
कर्णमुक्ताः शरव्रजाः ॥ सदानांबुकरंयांतिस्थूललक्ष्यंहिमार्गणाः ॥ ३९ ॥ प्रकाश्यकर्णेयुधिकालपृष्ठंभयंकराभेचलतिप्रवीरे ॥
तदीयभल्लैर्दलिताः परेऽपिप्रकाश्यचेलुर्बतरक्तपृष्ठं ॥ ४० ॥ तत्रतत्रयुधिसंचरमाणः शल्यसारथिमतासरथेन ॥ चूषितारिमदपा
णितयासौसूर्यसूनुरपिचंडकरोऽभूत् ॥ ४१ ॥ रवेः कुमारस्यरथंनिरीक्ष्यरमाप्रियस्यापितदासमीके ॥ धैर्यंत्वदः स्वेदजलंशरीरा
ज्जगालतोत्रंचजवेनहस्तात् ॥ ४२ ॥ गद्यं ॥ तदनंतरममर्त्यचक्रवर्तिविकर्त्तनतनयौपरस्परंसमरंप्रावर्त्तयितुमारभेतां ॥ पद्यं ॥
राधाकुंतीपुत्रयोः शौर्यभाजोश्चक्रीभूतौचापदंडौज्वलंतौ ॥ मध्यस्थायारंगभूदेवतायास्ताटंकाभामादधातेस्मतत्र ॥ ४३ ॥ अंव

१ कांडैः बाणैः लगुडैश्च २ स्थूललक्ष्यं दातारं स्थूलं शरव्यंच ३ कालपृष्ठं कर्णधनुः पक्षे नील पृष्टभागं.

बलात्मजंक्षणादवगम्यप्रियपाशकंमृधे ॥ यमदापितपांशकंव्यधार्द्वमयोः प्राथमिकः पराक्रमी ॥ ३ ॥ अथयुद्धतपर्त्तुदुः सहश्री



र्हरिदभ्यंतरधावदात्मघोषं ॥ सहतेस्मनकिंचिदप्युलूकंसहदेवस्यभुजप्रतापभानुः ॥ ४ ॥ ज्वालंनिषक्तमिवदानविधौकृशानोः

दधत्रमरवालमुदस्यचापं ॥ पार्थेनिहंतरिरिपूनथकांदिशीकाद्रोणात्मभूकृपमुखाः सहसावभूवुः ॥ ५ ॥ गद्यं ॥ इत्थंसोद

रदायादवरूथिनीनांरणाक्षितौपरिक्षयमभिवीक्ष्यमहीयसासाध्वसेनमनसिविरचितप्रथमप्रवेशः क्वचनरचितगूढावस्थितिरेवमह

तीममायुष्टोमेष्टिरित्यालोच्यझटितिघटितकवचावगुंठनः पन्नगकेतनः स्यमंतपंचकसामंतसागरगंभीरंस्वरितनामानंकंचनम

हान्हदमासाद्यमद्भुजेनाचिरधार्यमाणांक्षोणींत्वय्येवसमर्पयिष्यामीतिपातालवासिनः पन्नगाधिपतेर्द्विसहस्रलोचनेषुरहसिवचना

निनिवेदयितुमिवदूरंदूरंनिमज्यस्वाविद्ययासर्वमप्यंभस्तंभयामास ॥ पद्यं ॥ बकहंतापुराद्यामौधार्तराष्ट्रवधोद्यतः ॥ इतिभीतस्यराज्ञो



ऽस्ययुक्तंकासारमज्जनं ॥ ६ ॥ दरीषुवाशिखरिसरिद्झरीषुवापुरीषुवाघननववल्लरीषुवा ॥ तिरोभवेदयमितितंसमार्गितुंरणस्थला

१ आत्मघोषाः स्वशब्दाः पक्षे काकाः २ पन्नग केतनः दुर्योधनः

जांच ॥ उग्राहिनातस्यकिरीटशृंगमग्राहिनाकेंद्रभयेनसाकं ॥ ५२ ॥ ततः स्नेहरसार्द्रस्तंपक्षपातिभुजंगमं ॥ तक्षकः किलपार्थस्यवर्द्धयामाससायकः ॥ ५३ ॥ दंतींद्रपादातरथाश्वभेदीकुंतीकुमारः सहरेर्निदेशात् ॥ राधेयकायेविविधास्त्रजालमाधेयमेवन्यधितक्षणेन ॥ ५४ ॥ सर्वेषुयाचकजनेषुबहुप्रदत्वात्खर्वेनरोद्धतिरयंखमणेः कुमारः ॥ पार्थस्यमार्गणगणंपनितंशरीरेसार्थंव्यधादभिमतंसवितीर्यजीवं ॥ ५५ ॥ कर्णेपिकर्णेंद्रियमात्रपात्रेदुर्योधनः शोकरसेममज्ज ॥ अभ्यासभूमानमिवाधिरोढुमनागतस्य ह्रदमज्जनस्य ॥ ५६ ॥ ततः स्वकीयस्यतनूभवस्यवधादपस्नातुमनाइवद्राक् ॥ मंदायमानद्युतिभारमालीमरीचिमालीचममज्जसिंधौ ॥ ५७ ॥ ॥ इत्यनंतभट्टकविकृतौचंपूभारतेएकादशस्तबकः समाप्तः ॥ ॥ शल्यंततः परमरातिकुलस्यचित्यंदिशंतमनिशंरमणः कुरूणां ॥ केल्यंरणेषुपृतनाधिपतिंविधायतुल्यंत्रिविष्टपपतेः स्वममन्यतासौ ॥ १ ॥ तंतादृशंतदनुबाहुमदनशत्रूनाकंपयंतममरावलिमस्तकेन ॥ शक्त्यानिहत्ययुधिशल्यमजातशत्रोः पाणिर्दधौप्रथमतः परहिंसकत्वं ॥ २ ॥ अथतंसु

१ वर्धयामास वृद्धिंप्रापयामास छेदयामासच २ कल्यं चतुरं.

र्णांचकारगदयाश्वसनस्यसूनुः ॥ १२ ॥ तत्राथतारकामिवाद्रिसुताकुमारोजित्वासुयोधनमसौशिबिरंदिनांते ॥ वर्गः पृथातनुभु
वांमधुभित्समेतः षड्भिर्मुखैर्जनितशंखरवोजगाहे ॥ १३ ॥ भूयोपिसायमनलायमहः प्रदानेभासांप्रभोरिवकराद्दिशिविप्रकीर्णैः॥
ग्मैरिवाक्षिपथरोधिभिरंधकारैः प्रापेकुरुक्षितिभृतांपटमंडपौघः ॥ १४ ॥ तस्मिन्कालेविचिंत्यक्षितिपतिमसुभिर्युक्तमासाद्यरंगे
तराश्वास्यलापैर्निजमपिसमरेभाविकृत्यंनिवेद्य ॥ मुक्तस्तेनार्द्धमार्गेहरवरमुदितोद्रोणभूश्चापमौर्व्याधृष्टद्युम्नंनिकृत्यस्वसुरपि
तनयानस्यचिच्छेदशूरान् ॥ १५ ॥ गद्यं ॥ इत्थंनिशीथेभयानकनिजसायकशतधाशकलितद्विषदनीकात्कुरनायकपटनिकेतना
त्स्वभुजाभ्यामिवप्रविष्टकटकाभ्यां कृपकृतवर्मभ्यां सहपुनरपिसरस्तीरमागत्यदुष्करंस्ववृत्तांतंकथयंतमश्वत्थामानमयिसखेसंप्र
तिममप्रीतिरेतावतीत्यभिनेतुमिव तिर्यक्प्रसारितेनबाहुयुगलेनयत्नादाश्लिष्यत्वमेवखलुममप्राणोभवसीत्यौपचारिकवचनंप्रयुं
जानंतंराजानंकोपादिवतदीयाः प्राणास्तदानीमत्याक्षुः ॥ पद्यं ॥ कृपस्ततः कुरुपुरींकृतवर्माकुशस्थलीं ॥ प्रययौद्रोणसूनुश्चपा
राशर्यतपोवनीं ॥ १६ ॥ अथदीप्तिभिरात्मनोविजेतुर्विमतद्रौणिशिरोमणेर्भवित्रीं ॥ सहजास्पदभंगमानहानिंसवितादृष्टुमिवोद

त्पवनसुतौथनिर्ययौ ॥ ७ ॥ अपरैरपिसोदरैस्तदानीमनुजातस्यजयार्थसिद्धयेऽस्य ॥ शतमन्युभुवः पुरेवदिष्ट्याशबरः कश्चनसन्य
धाद्धनांते ॥ ८ ॥ गद्यं ॥ अथतेनकृतांजलिनासाविनयंनिवेदितायांसार्वभौमलक्षणोपेतायांपदपंक्तौलक्ष्यमाणैः सलिलमाहर्तुंवनदेव
ताभिरानीतैरिवकलशैरंकितादवतारपथात्संगररंगप्रयुक्त वि विधायुधस विधाधीततैक्ष्ण्यानीवपरुषा णिमारुतिवचना निनिशम्य
विशालैः क्रोधनिश्वासैरुपरिकोरकितबुद्बुदकलकलोदयात्तस्माज्जलाशयादुत्तीर्यमानिनामग्रणीः सुयोधनोधीरमनास्तादृशेन
भीमेनसहभयानकंगदागादिकलहायितुंसरभसमुपचक्रमे ॥ पद्यं ॥ आजगामससरस्वतीतटादाजिसीम्निबलवान्बलस्तदा ॥
ायुतेखलुयदाख्ययानिशंभद्रदेवपदयोः समागमः ॥ ९ ॥ तत्रविस्मयकरंगदाहवंपश्यतोऽस्यसहसंमदाश्रुभिः ॥ पुष्पवृष्टिरुभ
ारुपांतयोः पुष्करात्सुरभिगंधिरापतत् ॥ १० ॥ प्राविवेदकुलालचक्रवत्भ्रमतोस्तत्रतयोर्द्वयोर्भिदां ॥ नबलोनहरिर्नपांडवानसुरा
नाऽवमुखानचारणाः ॥ ११ ॥ मेन्नामधारिमृदुलंवसनंप्रमृद्नात्येतत्सदेत्यतिरुषेवयदूद्वहस्य ॥ नेत्रेणसूचितमेररथसक्थियुग्मंचू

१ नेत्रं वस्त्रे पिकप्यतइवि.

तस्वजनमुखेंदुस्मरणमात्रादुल्लोलितशोकासिंधुभिर्बंधुभिः सहनगरान्निर्गतोभवत्समेषुगतेष्वपियूयमद्यापिनानिर्गताइतिरोषेणप्रा
गान्बहिरुत्सारयितुमिवत्हृदिपुनः पुनर्विरचितकरास्फालनाभिः सविधमागम्यमॅज्जन्मभूसौंदर्यप्रा तिभटथ मियमाचरंतीत्यस
ूणुतयेवकपोलमकरिकामुन्मूलयंतंबाष्पप्रवाहंनयनैरुत्सृजंतीभिरनवरतमस्मान्कुसुमैरामोदभरितान्विदधानाः सुयोधनादयः
कपतिताइतिगवेषयितुमिवभुवितूर्णमवतीर्णैश्चिकुरहस्तैरुपलक्षिताभिः पवनसुतपरिघोपालंभनपूरितार्थैः परिदेवनरवैर्दिगंतरं
निरंतरयंतीभिः स्नुषाभिः परिवार्यमाणयागांधारसुतयाशनैः शनैरनुगम्यमानः संग्रामभुवमवगाह्यपंक्तिशोनिपतितेषुपरिशी
लितदीर्घनिद्रेषुपाकशासनपरिमुक्तपारिजातप्रसवपरिमलितकचबंधेषुप्रवीरेषुतनयेषुनिपत्यपरितोपिपरिलुंठन्सकुरुभूपश्चिर
मरोदीत् ॥ पद्यं ॥ रुष्टंपितृव्यममुमागतमाजिभूमौद्रष्टुंभयाकुलधियाऽथयुधिष्ठिरेण ॥ अभ्यर्थितौहरिपराशरनंदनौद्रागाजग्मतु
स्तमपनीतरुषंविधातुं ॥ २२ ॥ तंव्यासकृष्णावथतप्यमानंशोकेनशांतंसुतरांव्यधत्तां ॥ नभोनभस्याविवदाववृक्षंदंदह्यमानंदव

१ मज्जन्मभूः ममप्रवाहस्य जन्मभूरुत्पत्ति स्थानं नेत्रं २ चिकुर हस्तैः केशपाशैः ३ नभोनभस्यौ श्रावणः भाद्रपदश्च.

दयाद्रिमागात् ॥ १७ ॥ गद्यं ॥ ततः मरमात्मसोदरसूतमुखाच्छ्रवणकालकूटमपत्यात्ययमधिगम्यविषीदंत्यायाज्ञसेन्यामू
र्च्छांधकाररत्नदीपालोकेनदूरमुत्सारयितुमुत्सुकइवगुरुसुतचूडामणेराहरणायशतांगमधिरुह्यमौर्वीविस्फारयद्भिर्मघवत्कुमारादि
भिर्मांसलितपार्श्वभागोमारुतिस्तपस्यतस्तस्यैवाश्रमपदंप्रतस्थे ॥ पद्यं ॥ तत्रागतेषुयुधितेषुतपोधनोयमेकोपिधीरतरधीरिषुव
र्षकेषु ॥ निष्पांडवाऽस्तुवसुधेतिनिजव्रतेनसाकंव्यमुंचदभिमंत्र्यजवादिषीकां ॥ १८ ॥ अथब्रह्मशिरोस्त्रस्यप्रहितस्यकिरीटिना ॥
योगात्तूलपदस्येवऱ्हस्वभावंजगामसा ॥ १९ ॥ अथात्ततोमारुतिनाहठेनभग्नस्यशीर्षाद्गुरुनंदनस्य ॥ दत्तोमणिः पार्षतनंदनायाः
शोकाग्निदाहप्रतिबंधकोभूत् ॥ २० ॥ गद्यं ॥ ततः संवर्त्तसमयसच्छात्रेतादृशिकुरूणामुभयेषामपिसंप्रहारेकृष्णावेणीबंधायुषास
समाप्ते ॥ पद्यं ॥ स्वंदुःशलाशेषमपत्यवर्गंपांडोश्चाविज्ञायसमस्तशेषं ॥ दृशासदांधोजरठोमहीपश्चिरंतदाऽचेतनयाविजिग्ये
२१ ॥ गद्यं ॥ तदानींविदुरसंजयाभ्यांव्यजनादिभिरुपचारैर्विश्राणितसंज्ञोहासुयोधनदुःशासनेतिबहुधाविलपन्नुत्थायरणनिह

१ इष्टकेषीकामाला नामिति सूत्रेण इषीकाया स्तूल पदस्य योगात् ऱ्हस्वत्वं तद्वदित्यर्थः

द्विपमौपवाह्यमधिरूढः शशिमंडलेनशरद्राकाशर्वरीप्रथमयामइवधवलातपत्रेणपरिष्क्रियमाणोपरिभागोलालनवशेनपार्श्वयोरा
गम्यप्रमोदतरलपक्षपुटाभ्यां मरालदंपतिभ्यां चतुर्मुखइवचामराभ्यामुपवीज्यमानोहर्म्यशिखरावलंबिनीनां नितंबिनीनांकपोल
स्खलनदूरविप्रकीर्णैरानंदबाष्पबिंदुमुकुलैरिवलाजांजलिभिरवकीर्यमाणः पुरः सरविविधमंगलवाद्यगुरुजनाशिष्यायमाणगवाक्ष
नरांतांपुरींप्रदक्षिणीकृत्यद्वारभुवमवतीर्णो निजमणितिलकप्रतिबिंबानीवदीपांकुराणिकनकपात्रमध्येवहंतीभिर्वारसीमंतिनी
भिर्विरचिताचिक्यमंगलः पांडुसूनुर्निबिडवितानमाल्यधूपपरिमलसुरभितेमंडपेकुरुकुलक्रमादागतंसर्वतोभद्रंनाम सिंहासनम
ध्यवात्सीत् ॥ पद्यं ॥ सौधंकदाचिदधिरुह्यसमंसुहृद्भिर्भूपाश्विराद्विरहितस्यपुरस्यतस्य ॥ वापीषुवीथिषुवनीषुचतुष्पथेषुनृत्याल
येषुचानिमज्जयातिस्मदृष्टिं ॥ २८ ॥ तदानींखलु ॥ क्षोणींकोशगृहाणिगोधनततिंघोटान्रथान्कुंजरानन्यांसंपदमप्यदात्वणामि
षादस्माकमीशाययः ॥ तादृक्षः शकुनेः करोविजयतामित्यालपंतीः शुकीरुद्यानेथनिशम्यधर्मतनयोमंदंजहासानुजैः ॥ २९ ॥

१. दुर्योधनाय.

पावकेन ॥ २३ ॥ गद्यं ॥ अथसहजैः संममाहवभुवमागम्यस्वामिन्ननेकविधापराधकरणेनतवशापपात्रमयंजनआगतइतिचर
णयोः पतंतमात्मानंप्रथमतोमृदुलमालिंगितवंतंपश्चाद्भावज्ञेनमुकुंदेनपुरः स्थापितेनलोहभीमसेनेनसहनिजवैरमपिचूर्णीकृतवंतं
प्रज्ञादृशंपुरस्कृत्यस्मृतबहुलकरणीयजातोयुधिष्ठिरः पुरामगीरथइवप्रेतभूयंगतायसर्वस्मैज्ञातिजनायनिर्मलैर्निलिंपनिम्नगासलि
लैर्निवापांजलिनिर्वापणंविधिवदेवानिर्वर्तयामास ॥ पद्यं ॥ सुधाब्धिर्वीचीरिवतोरणावलीस्ततोवहंतींततवाद्यनिस्वनां ॥ हरि
पुरोग्रायसमंसहोदरैराविक्षदात्मीयपुरंयुधिष्ठिरः ॥ २४ ॥ वलग्नसूतैर्द्रुपदात्मजायावितानितेधाम्निसतत्रचेलैः ॥ स्थित्वापितृव्य
स्यदिनंतदेकंपरेऽन्हिपार्थः प्रययौस्वगेहं ॥ २५ ॥ ततः ॥ राज्याभिषेकसलिलादिवसंगतंद्रागावर्त्तमुद्वहतिमूर्धनिधर्मसूनोः ॥
कृष्णादयः शुभगुणेकृतिनोमुहूर्तेहैमंन्यधुर्मुकुटमुज्ज्वलरत्नजालं ॥ २६ ॥ द्विजप्रणामेषुनृपस्यलग्नाभूरेणुराजिर्भुजसीम्नि रेजे ॥
एकाधिकद्वादशहायनेषुक्षितिः कृशांगीविरहादिवास्य ॥ २७॥ गद्यं ॥ तदानीमेवपराशरसुतविदुरसंजयैः सहसंभाषमाणंरमा
रमणमग्रतोविधायसविनयंबीभत्सुनादीयमानहस्तावलंबोभूभारलघुकरणोपकारेणप्रीयमाणैर्दिग्वारणैः प्रेषितमिवमहांतंकंचित्

कृत्यज्ञः पांडवोऽसौसु... तरत्यंतमार्त्तभक्त्यासार्कंपितृ... तोदिनमनुजैरग्रनः स्थापयित्वा ॥ कृत्वाधस्तात्कुशाग्रांवि जितामिवाधियाप्रांजलिः सर्वधर्मान्भीष्माद्वर्णाश्रमाणामविकलमशृणोत्स्वास्पदंगंतुमिच्छोः ॥ ३० ॥ आलंकायास्तदनुसहजैरा हिमाद्रेर्जितश्रीः शौरेर्दोष्णाघटितनिजदोर्धर्मभूर्वेदिपार्श्वे ॥ साहस्रीणा... पखदृशांसंदधानोभ्यसूयामन्याहृक्षांनियमपरधीराज हाराश्वमेधं ॥ ३१ ॥ राज्ञांमौलिपरंपरांचरणयोः पाणौप्रदानश्रियंबुद्धौरा... दयंत्वांदिक्पांसत्यंचाजिह्वांचले ॥ बाहौसागरमे खलांवसुमतींमस्तेकिरीटंमुदाकुर्वन्धर्मतनूभवाश्चिरमसौगोपायतिस्मप्रजा... ३२ ॥ ॥ इत्यनंतभट्टकविकृतौचंपुभारते ...दशस्तबकः ॥ ॥ दिगंतरलुठत्कीर्त्तिरनंतकविकुंजरः ॥ प्राणैस्तु... स्वत्याः प्राणैषीच्चंपुभारतं ॥ १ ॥ उन्मीलदंबु कदंबकसौरभीणामुन्नृत्यदीशमुकुटीतटिनीसखीनां ॥ आचांतवैरियशस... ोर्मिलानांवाचामनंतसुकवेर्वसुधाप्यमूल्यं ॥ ...चिचंपुभारतकाव्यंसमाप्तं ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥ इंदुप्रकाशाख्यमुद्रायंत्रे मुद्रितः ॥ शके १७८६ रक्त... संवत्सरे ॥

